# महाभारत - सभा पर्व


सभापर्व १
अध्याय ००१ . . . . . . . . . . . . . . . . . . . . . . . . १
अध्याय ००२ . . . . . . . . . . . . . . . . . . . . . . . . ३
अध्याय ००३ . . . . . . . . . . . . . . . . . . . . . . . . ६
अध्याय ००४ . . . . . . . . . . . . . . . . . . . . . . . . १०
अध्याय ००५ . . . . . . . . . . . . . . . . . . . . . . . . १४
अध्याय ००६ . . . . . . . . . . . . . . . . . . . . . . . . २६
अध्याय ००७ . . . . . . . . . . . . . . . . . . . . . . . . २८
अध्याय ००८ . . . . . . . . . . . . . . . . . . . . . . . . ३१
अध्याय ००९ . . . . . . . . . . . . . . . . . . . . . . . . ३५
अध्याय ०१० . . . . . . . . . . . . . . . . . . . . . . . . ३७
अध्याय ०११ . . . . . . . . . . . . . . . . . . . . . . . . ४०

मन्त्रपर्व ४८
अध्याय ०१२ . . . . . . . . . . . . . . . . . . . . . . . . ४८
अध्याय ०१३ . . . . . . . . . . . . . . . . . . . . . . . . ५२
अध्याय ०१४ . . . . . . . . . . . . . . . . . . . . . . . . ५९
अध्याय ०१५ . . . . . . . . . . . . . . . . . . . . . . . . ६१
अध्याय ०१६ . . . . . . . . . . . . . . . . . . . . . . . . ६३
अध्याय ०१७ . . . . . . . . . . . . . . . . . . . . . . . . ६९

जरासंधपर्व ७२

अध्याय ०१८ . . . . . . . . . . . . . . . . . . . . . . . . . ७२
अध्याय ०१९ . . . . . . . . . . . . . . . . . . . . . . . . . ७५
अध्याय ०२० . . . . . . . . . . . . . . . . . . . . . . . . . ८०
अध्याय ०२१ . . . . . . . . . . . . . . . . . . . . . . . . . ८४
अध्याय ०२२ . . . . . . . . . . . . . . . . . . . . . . . . . ८६

दिग्विजयपर्व ९२
अध्याय ०२३ . . . . . . . . . . . . . . . . . . . . . . . . . ९२
अध्याय ०२४ . . . . . . . . . . . . . . . . . . . . . . . . . ९५
अध्याय ०२५ . . . . . . . . . . . . . . . . . . . . . . . . . ९८
अध्याय ०२६ . . . . . . . . . . . . . . . . . . . . . . . . . १००
अध्याय ०२७ . . . . . . . . . . . . . . . . . . . . . . . . . १०२
अध्याय ०२८ . . . . . . . . . . . . . . . . . . . . . . . . . १०५
अध्याय ०२९ . . . . . . . . . . . . . . . . . . . . . . . . . १११

राजसूयपर्व ११४
अध्याय ०३० . . . . . . . . . . . . . . . . . . . . . . . . . ११४
अध्याय ०३१ . . . . . . . . . . . . . . . . . . . . . . . . . ११९
अध्याय ०३२ . . . . . . . . . . . . . . . . . . . . . . . . . १२२

अर्घाभिहरणपर्व १२४
अध्याय ०३३ . . . . . . . . . . . . . . . . . . . . . . . . . १२४
अध्याय ०३४ . . . . . . . . . . . . . . . . . . . . . . . . . १२८
अध्याय ०३५ . . . . . . . . . . . . . . . . . . . . . . . . . १३०
अध्याय ०३६ . . . . . . . . . . . . . . . . . . . . . . . . . १३४

शिशुपालवधपर्व १३५
अध्याय ०३७ . . . . . . . . . . . . . . . . . . . . . . . . . १३५
अध्याय ०३८ . . . . . . . . . . . . . . . . . . . . . . . . . १३७
अध्याय ०३९ . . . . . . . . . . . . . . . . . . . . . . . . . १४१
अध्याय ०४० . . . . . . . . . . . . . . . . . . . . . . . . . १४४
अध्याय ०४१ . . . . . . . . . . . . . . . . . . . . . . . . . १४६

अध्याय ०४२ . . . . . . . . . . . . . . . . . . . . . . . . . . १५०

द्यूतपर्व १५७

अध्याय ०४३ . . . . . . . . . . . . . . . . . . . . . . . . . . १५७
अध्याय ०४४ . . . . . . . . . . . . . . . . . . . . . . . . . . १६०
अध्याय ०४५ . . . . . . . . . . . . . . . . . . . . . . . . . . १६३
अध्याय ०४६ . . . . . . . . . . . . . . . . . . . . . . . . . . १७०
अध्याय ०४७ . . . . . . . . . . . . . . . . . . . . . . . . . . १७३
अध्याय ०४८ . . . . . . . . . . . . . . . . . . . . . . . . . . १७७
अध्याय ०४९ . . . . . . . . . . . . . . . . . . . . . . . . . . १८१
अध्याय ०५० . . . . . . . . . . . . . . . . . . . . . . . . . . १८४
अध्याय ०५१ . . . . . . . . . . . . . . . . . . . . . . . . . . १८७
अध्याय ०५२ . . . . . . . . . . . . . . . . . . . . . . . . . . १९०
अध्याय ०५३ . . . . . . . . . . . . . . . . . . . . . . . . . . १९५
अध्याय ०५४ . . . . . . . . . . . . . . . . . . . . . . . . . . १९८
अध्याय ०५५ . . . . . . . . . . . . . . . . . . . . . . . . . . २०३
अध्याय ०५६ . . . . . . . . . . . . . . . . . . . . . . . . . . २०४
अध्याय ०५७ . . . . . . . . . . . . . . . . . . . . . . . . . . २०६
अध्याय ०५८ . . . . . . . . . . . . . . . . . . . . . . . . . . २०८
अध्याय ०५९ . . . . . . . . . . . . . . . . . . . . . . . . . . २१४
अध्याय ०६० . . . . . . . . . . . . . . . . . . . . . . . . . . २१६
अध्याय ०६१ . . . . . . . . . . . . . . . . . . . . . . . . . . २२२
अध्याय ०६२ . . . . . . . . . . . . . . . . . . . . . . . . . . २३०
अध्याय ०६३ . . . . . . . . . . . . . . . . . . . . . . . . . . २३५
अध्याय ०६४ . . . . . . . . . . . . . . . . . . . . . . . . . . २३९
अध्याय ०६५ . . . . . . . . . . . . . . . . . . . . . . . . . . २४१

अनुद्यूतपर्व २४४

अध्याय ०६६ . . . . . . . . . . . . . . . . . . . . . . . . . . २४४
अध्याय ०६७ . . . . . . . . . . . . . . . . . . . . . . . . . . २४८
अध्याय ०६८ . . . . . . . . . . . . . . . . . . . . . . . . . . २५१
अध्याय ०६९ . . . . . . . . . . . . . . . . . . . . . . . . . . २५६

# ॥ महाभारत सभापर्व ॥

## सभापर्व

### अध्याय ००१

वैशंपायन उवाच ॥

ततोऽब्रवीन्मयः पार्थं वासुदेवस्य संनिधौ ।
प्राञ्जलिः श्लक्ष्णया वाचा पूजयित्वा पुनः पुनः ॥ ००१ ॥

अस्माच्च कृष्णात्सङ्क्रुद्धात्पावकाच्च दिधक्षतः ।
त्वया त्रातोऽस्मि कौन्तेय ब्रूहि किं करवाणि ते ॥ ००२ ॥

अर्जुन उवाच ॥

कृतमेव त्वया सर्वं स्वस्ति गच्छ महासुर ।
प्रीतिमान्भव मे नित्यं प्रीतिमन्तो वयं च ते ॥ ००३ ॥

मय उवाच ॥

युक्तमेतत्त्वयि विभो यथात्थ पुरुषर्षभ ।
प्रीतिपूर्वमहं किञ्चित्कर्तुमिच्छामि भारत ॥ ००४ ॥

अहं हि विश्वकर्मा वै दानवानां महाकविः ।
सोऽहं वै त्वत्कृते किञ्चित्कर्तुमिच्छामि पाण्डव ॥ ००५ ॥

अर्जुन उवाच ॥

प्राणकृच्छ्राद्विमुक्तं त्वमात्मानं मन्यसे मया ।
एवं गते न शक्ष्यामि किञ्चित्कारयितुं त्वया ॥ ००६ ॥

न चापि तव सङ्कल्पं मोघमिच्छामि दानव ।
कृष्णस्य क्रियतां किञ्चित्तथा प्रतिकृतं मयि ॥ ००७ ॥

वैशंपायन उवाच ॥

चोदितो वासुदेवस्तु मयेन भरतर्षभ ।
मुहूर्तमिव संदध्यौ किमयं चोद्यतामिति ॥ ००८ ॥

चोदयामास तं कृष्णः सभा वै क्रियतामिति ।
धर्मराजस्य दैतेय यादृशीमिह मन्यसे ॥ ००९ ॥

यां कृतां नानुकुर्युस्ते मानवाः प्रेक्ष्य विस्मिताः ।
मनुष्यलोके कृत्स्नेऽस्मिंस्तादृशीं कुरु वै सभाम् ॥ ०१० ॥

यत्र दिव्यानभिप्रायान्पश्येम विहितांस्त्वया ।
आसुरान्मानुषांश्चैव तां सभां कुरु वै मय ॥ ०११ ॥

प्रतिगृह्य तु तद्वाक्यं संप्रहृष्टो मयस्तदा ।
विमानप्रतिमां चक्रे पाण्डवस्य सभां मुदा ॥ ०१२ ॥

ततः कृष्णश्च पार्थश्च धर्मराजे युधिष्ठिरे ।
सर्वमेतद्यथावेद्य दर्शयामासतुर्मयम् ॥ ०१३ ॥

तस्मै युधिष्ठिरः पूजां यथार्हमकरोत्तदा ।
स तु तां प्रतिजग्राह मयः सत्कृत्य सत्कृतः ॥ ०१४ ॥

स पूर्वदेवचरितं तत्र तत्र विशां पते ।
कथयामास दैतेयः पाण्डुपुत्रेषु भारत ॥ ०१५ ॥

स कालं कञ्चिदाश्वस्य विश्वकर्मा प्रचिन्त्य च ।
सभां प्रचक्रमे कर्तुं पाण्डवानां महात्मनाम् ॥ ०१६ ॥

अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः ।
पुण्येऽहनि महातेजाः कृतकौतुकमङ्गलः ॥ ०१७ ॥

तर्पयित्वा द्विजश्रेष्ठान्पायसेन सहस्रशः ।
धनं बहुविधं दत्त्वा तेभ्य एव च वीर्यवान् ॥ ०१८ ॥

सर्वर्तुगुणसंपन्नां दिव्यरूपां मनोरमाम् ।
दशकिष्कुसहस्रां तां मापयामास सर्वतः ॥ ०१९ ॥

---

# अध्याय ००२

वैशंपायन उवाच ॥

उषित्वा खाण्डवप्रस्थे सुखवासं जनार्दनः ।
पार्थैः प्रीतिसमायुक्तैः पूजनार्होऽभिपूजितः ॥ ००१ ॥

गमनाय मतिं चक्रे पितुर्दर्शनलालसः ।
धर्मराजमथामन्त्र्य पृथां च पृथुलोचनः ॥ ००२ ॥

ववन्दे चरणौ मूर्ध्ना जगद्वन्द्यः पितृष्वसुः ।
स तया मूर्ध्न्युपाघ्रातः परिष्वक्तश्च केशवः ॥ ००३ ॥

ददर्शानन्तरं कृष्णो भगिनीं स्वां महायशाः ।
तामुपेत्य हृषीकेशः प्रीत्या बाष्पसमन्वितः ॥ ००४ ॥

अर्थ्यं तथ्यं हितं वाक्यं लघु युक्तमनुत्तमम् ।
उवाच भगवान्भद्रां सुभद्रां भद्रभाषिणीम् ॥ ००५ ॥

तया स्वजनगामीनि श्रावितो वचनानि सः ।
संपूजितश्चाप्यसकृच्छिरसा चाभिवादितः ॥ ००६ ॥

तामनुज्ञाप्य वार्ष्णेयः प्रतिनन्द्य च भामिनीम् ।
ददर्शानन्तरं कृष्णां धौम्यं चापि जनार्दनः ॥ ००७ ॥

ववन्दे च यथान्यायं धौम्यं पुरुषसत्तमः ।
द्रौपदीं सान्त्वयित्वा च आमन्त्र्य च जनार्दनः ॥ ००८ ॥

भ्रातॄनभ्यगमद्धीमान्पार्थेन सहितो बली ।
भ्रातृभिः पञ्चभिः कृष्णो वृतः शक्र इवामरैः ॥ ००९ ॥

अर्चयामास देवांश्च द्विजांश्च यदुपुङ्गवः ।
माल्यजप्यनमस्कारैर्गन्धैरुच्चावचैरपि ॥ ०१० ॥

स कृत्वा सर्वकार्याणि प्रतस्थे तस्थुषां वरः ॥ ०१० ॥

स्वस्ति वाच्यार्हतो विप्रान्दधिपात्रफलाक्षतैः ।
वसु प्रदाय च ततः प्रदक्षिणमवर्तत ॥ ०११ ॥

काञ्चनं रथमास्थाय तार्क्ष्यकेतनमाशुगम् ।

गदाचक्रासिशार्ङ्गाद्यैरायुधैश्च समन्वितम् ॥ ०१२ ॥

तिथावथ च नक्षत्रे मुहूर्ते च गुणान्विते ।
प्रययौ पुण्डरीकाक्षः सैन्यसुग्रीववाहनः ॥ ०१३ ॥

अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः ।
अपास्य चास्य यन्तारं दारुकं यन्तृसत्तमम् ॥ ०१४ ॥

अभीषून्संप्रजग्राह स्वयं कुरुपतिस्तदा ॥ ०१४ ॥

उपारुह्यार्जुनश्चापि चामरव्यजनं सितम् ।
रुक्मदण्डं बृहन्मूर्ध्नि दुधावाभिप्रदक्षिणम् ॥ ०१५ ॥

तथैव भीमसेनोऽपि यमाभ्यां सहितो वशी ।
पृष्ठतोऽनुययौ कृष्णमृत्विक्पौरजनैर्वृतः ॥ ०१६ ॥

स तथा भ्रातृभिः सार्धं केशवः परवीरहा ।
अनुगम्यमानः शुशुभे शिष्यैरिव गुरुः प्रियैः ॥ ०१७ ॥

पार्थमामन्त्र्य गोविन्दः परिष्वज्य च पीडितम् ।
युधिष्ठिरं पूजयित्वा भीमसेनं यमौ तथा ॥ ०१८ ॥

परिष्वक्तो भृशं ताभ्यां यमाभ्यामभिवादितः ।
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः ॥ ०१९ ॥

निवर्तयित्वा च तदा पाण्डवान्सपदानुगान् ।
स्वां पुरीं प्रययौ कृष्णः पुरंदर इवापरः ॥ ०२० ॥

लोचनैरनुजग्मुस्ते तमा दृष्टिपथात्तदा ।
मनोभिरनुजग्मुस्ते कृष्णं प्रीतिसमन्वयात् ॥ ०२१ ॥

अतृप्तमनसामेव तेषां केशवदर्शने ।
क्षिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः ॥ ०२२ ॥

अकामा इव पार्थास्ते गोविन्दगतमानसाः ।
निवृत्योपययुः सर्वे स्वपुरं पुरुषर्षभाः ॥ ०२३ ॥

स्यन्दनेनाथ कृष्णोऽपि समये द्वारकामगात् ॥ ०२३ ॥

---

# अध्याय ००३

वैशंपायन उवाच ॥

अथाब्रवीन्मयः पार्थमर्जुनं जयतां वरम् ।
आपृच्छे त्वां गमिष्यामि क्षिप्रमेष्यामि चाप्यहम् ॥ ००१ ॥

उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति ।
यक्ष्यमाणेषु सर्वेषु दानवेषु तदा मया ॥ ००२ ॥

कृतं मणिमयं भाण्डं रम्यं बिन्दुसरः प्रति ॥ ००२ ॥

सभायां सत्यसंधस्य यदासीद्वृषपर्वणः ।
आगमिष्यामि तद्गृह्य यदि तिष्ठति भारत ॥ ००३ ॥

ततः सभां करिष्यामि पाण्डवाय यशस्विने ।
मनःप्रह्लादिनीं चित्रां सर्वरत्नविभूषिताम् ॥ ००४ ॥

अस्ति बिन्दुसरस्येव गदा श्रेष्ठा कुरूद्वह ।
निहिता यौवनाश्वेन राज्ञा हत्वा रणे रिपून् ॥ ००५ ॥

सुवर्णबिन्दुभिश्चित्रा गुर्वी भारसहा दृढा ॥ ००५ ॥

सा वै शतसहस्रस्य संमिता सर्वघातिनी ।
अनुरूपा च भीमस्य गाण्डीवं भवतो यथा ॥ ००६ ॥

वारुणश्च महाशङ्खो देवदत्तः सुघोषवान् ।
सर्वमेतत्प्रदास्यामि भवते नात्र संशयः ॥ ००७ ॥

इत्युक्त्वा सोऽसुरः पार्थं प्रागुदीचीमगाद्दिशम् ॥ ००७ ॥

उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति ।
हिरण्यशृङ्गो भगवान्महामणिमयो गिरिः ॥ ००८ ॥

रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ।
दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः ॥ ००९ ॥

यत्रेष्ट्वा सर्वभूतानामीश्वरेण महात्मना ।
आहृताः क्रतवो मुख्याः शतं भरतसत्तम ॥ ०१० ॥

यत्र यूपा मणिमयाश्चित्याश्चापि हिरण्मयाः ।
शोभार्थं विहितास्तत्र न तु दृष्टान्ततः कृताः ॥ ०११ ॥

यत्रेष्ट्वा स गतः सिद्धिं सहस्राक्षः शचीपतिः ।
यत्र भूतपतिः सृष्ट्वा सर्वलोकान्सनातनः ॥ ०१२ ॥

उपास्यते तिग्मतेजा वृतो भूतैः सहस्रशः ॥ ०१२ ॥

नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः ।
उपासते यत्र सत्रं सहस्रयुगपर्यये ॥ ०१३ ॥

यत्रेष्टं वासुदेवेन सत्रैर्वर्षसहस्रकैः ।
श्रद्दधानेन सततं शिष्टसंप्रतिपत्तये ॥ ०१४ ॥

सुवर्णमालिनो यूपाश्चित्याश्चाप्यतिभास्वराः ।
ददौ यत्र सहस्राणि प्रयुतानि च केशवः ॥ ०१५ ॥

तत्र गत्वा स जग्राह गदां शङ्खं च भारत ।
स्फाटिकं च सभाद्रव्यं यदासीद्वृषपर्वणः ॥ ०१६ ॥

किङ्करैः सह रक्षोभिरगृह्णात्सर्वमेव तत् ॥ ०१६ ॥

तदाहृत्य तु तां चक्रे सोऽसुरोऽप्रतिमां सभाम् ।
विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं शुभाम् ॥ ०१७ ॥

गदां च भीमसेनाय प्रवरां प्रददौ तदा ।
देवदत्तं च पार्थाय ददौ शङ्खमनुत्तमम् ॥ ०१८ ॥

सभा तु सा महाराज शातकुम्भमयद्रुमा ।
दश किष्कुसहस्राणि समन्तादायताभवत् ॥ ०१९ ॥

यथा वह्नेर्यथार्कस्य सोमस्य च यथैव सा ।
भ्राजमाना तथा दिव्या बभार परमं वपुः ॥ ०२० ॥

प्रतिघ्नतीव प्रभया प्रभामर्कस्य भास्वराम् ।
प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्चसा ॥ ०२१ ॥

नगमेघप्रतीकाशा दिवमावृत्य विष्ठिता ।
आयता विपुला श्लक्ष्णा विपाप्मा विगतक्लमा ॥ ०२२ ॥

उत्तमद्रव्यसंपन्ना मणिप्राकारमालिनी ।
बहुरत्ना बहुधना सुकृता विश्वकर्मणा ॥ ०२३ ॥

न दाशार्ही सुधर्मा वा ब्रह्मणो वापि तादृशी ।
आसीद्रूपेण संपन्ना यां चक्रेऽप्रतिमां मयः ॥ ०२४ ॥

तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च ।
सभामष्टौ सहस्राणि किङ्करा नाम राक्षसाः ॥ ०२५ ॥

अन्तरिक्षचरा घोरा महाकाया महाबलाः ।
रक्ताक्षाः पिङ्गलाक्षाश्च शुक्तिकर्णाः प्रहारिणः ॥ ०२६ ॥

तस्यां सभायां नलिनीं चकाराप्रतिमां मयः ।
वैडूर्यपत्रविततां मणिनालमयाम्बुजाम् ॥ ०२७ ॥

पद्मसौगन्धिकवतीं नानाद्विजगणायुताम् ।
पुष्पितैः पङ्कजैश्चित्रां कूर्ममत्स्यैश्च शोभिताम् ॥ ०२८ ॥

सूपतीर्थामकलुषां सर्वर्तुसलिलां शुभाम् ।
मारुतेनैव चोद्धूतैर्मुक्ताबिन्दुभिराचिताम् ॥ ०२९ ॥

मणिरत्नचितां तां तु केचिदभ्येत्य पार्थिवाः ।
दृष्ट्वापि नाभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ॥ ०३० ॥

तां सभामभितो नित्यं पुष्पवन्तो महाद्रुमाः ।
आसन्नानाविधा नीलाः शीतच्छाया मनोरमाः ॥ ०३१ ॥

काननानि सुगन्धीनि पुष्करिण्यश्च सर्वशः ।
हंसकारण्डवयुताश्चक्रवाकोपशोभिताः ॥ ०३२ ॥

जलजानां च माल्यानां स्थलजानां च सर्वशः ।
मारुतो गन्धमादाय पाण्डवान्स्म निषेवते ॥ ०३३ ॥

ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः ।
निष्ठितां धर्मराजाय मयो राज्ञे न्यवेदयत् ॥ ०३४ ॥

---

# अध्याय ००४

वैशंपायन उवाच ॥

ततः प्रवेशनं चक्रे तस्यां राजा युधिष्ठिरः ।
अयुतं भोजयामास ब्राह्मणानां नराधिपः ॥ ००१ ॥

घृतपायसेन मधुना भक्ष्यैर्मूलफलैस्तथा ।
अहतैश्चैव वासोभिर्माल्यैरुच्चावचैरपि ॥ ००२ ॥

ददौ तेभ्यः सहस्राणि गवां प्रत्येकशः प्रभुः ।
पुण्याहघोषस्तत्रासीद्दिवस्पृगिव भारत ॥ ००३ ॥

वादित्रैर्विविधैर्गीतैर्गन्धैरुच्चावचैरपि ।
पूजयित्वा कुरुश्रेष्ठो दैवतानि निवेश्य च ॥ ००४ ॥

तत्र मल्ला नटा झल्लाः सूता वैतालिकास्तथा ।
उपतस्थुर्महात्मानं सप्तरात्रं युधिष्ठिरम् ॥ ००५ ॥

तथा स कृत्वा पूजां तां भ्रातृभिः सह पाण्डवः ।
तस्यां सभायां रम्यायां रेमे शक्रो यथा दिवि ॥ ००६ ॥

सभायामृषयस्तस्यां पाण्डवैः सह आसते ।
आसां चक्रुर्नरेन्द्राश्च नानादेशसमागताः ॥ ००७ ॥

असितो देवलः सत्यः सर्पमाली महाशिराः ।
अर्वावसुः सुमित्रश्च मैत्रेयः शुनको बलिः ॥ ००८ ॥

बको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः ।
सुमन्तुर्जैमिनिः पैलो व्यासशिष्यास्तथा वयम् ॥ ००९ ॥

तित्तिरिर्याज्ञवल्क्यश्च ससुतो लोमहर्षणः ।
अप्सुहोम्यश्च धौम्यश्च आणीमाण्डव्यकौशिकौ ॥ ०१० ॥

दामोष्णीषस्त्रैवणिश्च पर्णादो घटजानुकः ।
मौञ्जायनो वायुभक्षः पाराशर्यश्च सारिकौ ॥ ०११ ॥

बलवाकः शिनीवाकः सुत्यपालः कृतश्रमः ।
जातूकर्णः शिखावांश्च सुबलः पारिजातकः ॥ ०१२ ॥

पर्वतश्च महाभागो मार्कण्डेयस्तथा मुनिः ।
पवित्रपाणिः सावर्णिर्भालुकिर्गालवस्तथा ॥ ०१३ ॥

जङ्घाबन्धुश्च रैभ्यश्च कोपवेगश्रवा भृगुः ।
हरिबभ्रुश्च कौण्डिन्यो बभ्रुमाली सनातनः ॥ ०१४ ॥

कक्षीवानौशिजश्चैव नाचिकेतोऽथ गौतमः ।
पैङ्गो वराहः शुनकः शाण्डिल्यश्च महातपाः ॥ ०१५ ॥

कर्करो वेणुजङ्घश्च कलापः कठ एव च ॥ ०१५ ॥

मुनयो धर्मसहिता धृतात्मानो जितेन्द्रियाः ।
एते चान्ये च बहवो वेदवेदाङ्गपारगाः ॥ ०१६ ॥

उपासते महात्मानं सभायामृषिसत्तमाः ।

कथयन्तः कथाः पुण्या धर्मज्ञाः शुचयोऽमलाः ॥ ०१७ ॥

तथैव क्षत्रियश्रेष्ठा धर्मराजमुपासते ।
श्रीमान्महात्मा धर्मात्मा मुञ्जकेतुर्विवर्धनः ॥ ०१८ ॥

सङ्ग्रामजिद्दुर्मुखश्च उग्रसेनश्च वीर्यवान् ।
कक्षसेनः क्षितिपतिः क्षेमकश्चापराजितः ॥ ०१९ ॥

काम्बोजराजः कमलः कम्पनश्च महाबलः ॥ ०१९ ॥

सततं कम्पयामास यवनानेक एव यः ।
यथासुरान्कालकेयान्देवो वज्रधरस्तथा ॥ ०२० ॥

जटासुरो मद्रकान्तश्च राजा ; कुन्तिः कुणिन्दश्च किरातराजः ।
तथाङ्गवङ्गौ सह पुण्ड्रकेण ; पाण्ड्योड्रराजौ सह चान्ध्रकेण ॥ ०२१ ॥

किरातराजः सुमना यवनाधिपतिस्तथा ।
चाणूरो देवरातश्च भोजो भीमरथश्च यः ॥ ०२२ ॥

श्रुतायुधश्च कालिङ्गो जयत्सेनश्च मागधः ।
सुशर्मा चेकितानश्च सुरथोऽमित्रकर्षणः ॥ ०२३ ॥

केतुमान्वसुदानश्च वैदेहोऽथ कृतक्षणः ।
सुधर्मा चानिरुद्धश्च श्रुतायुश्च महाबलः ॥ ०२४ ॥

अनूपराजो दुर्धर्षः क्षेमजिच्च सुदक्षिणः ।
शिशुपालः सहसुतः करूषाधिपतिस्तथा ॥ ०२५ ॥

वृष्णीनां चैव दुर्धर्षाः कुमारा देवरूपिणः ।
आहुको विपृथुश्चैव गदः सारण एव च ॥ ०२६ ॥

अक्रूरः कृतवर्मा च सात्यकिश्च शिनेः सुतः ।
भीष्मकोऽथाहृतिश्चैव द्युमत्सेनश्च वीर्यवान् ॥ ०२७ ॥

केकयाश्च महेष्वासा यज्ञसेनश्च सौमकिः ॥ ०२७ ॥

अर्जुनं चापि संश्रित्य राजपुत्रा महाबलाः ।
अशिक्षन्त धनुर्वेदं रौरवाजिनवाससः ॥ ०२८ ॥

तत्रैव शिक्षिता राजन्कुमारा वृष्णिनन्दनाः ।
रौक्मिणेयश्च साम्बश्च युयुधानश्च सात्यकिः ॥ ०२९ ॥

एते चान्ये च बहवो राजानः पृथिवीपते ।
धनञ्जयसखा चात्र नित्यमास्ते स्म तुम्बुरुः ॥ ०३० ॥

चित्रसेनः सहामात्यो गन्धर्वाप्सरसस्तथा ।
गीतवादित्रकुशलाः शम्यातालविशारदाः ॥ ०३१ ॥

प्रमाणेऽथ लयस्थाने किंनराः कृतनिश्रमाः ।
सञ्चोदितास्तुम्बुरुणा गन्धर्वाः सहिता जगुः ॥ ०३२ ॥

गायन्ति दिव्यतानैस्ते यथान्यायं मनस्विनः ।
पाण्डुपुत्रानृषींश्चैव रमयन्त उपासते ॥ ०३३ ॥

तस्यां सभायामासीनाः सुव्रताः सत्यसङ्गराः ।
दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते ॥ ०३४ ॥

# अध्याय ००५

वैशंपायन उवाच ॥

तथा तत्रोपविष्टेषु पाण्डवेषु महात्मसु ।
महत्सु चोपविष्टेषु गन्धर्वेषु च भारत ॥ ००१ ॥

लोकाननुचरन्सर्वानागमत्तां सभामृषिः ।
नारदः सुमहातेजा ऋषिभिः सहितस्तदा ॥ ००२ ॥

पारिजातेन राजेन्द्र रैवतेन च धीमता ।
सुमुखेन च सौम्येन देवर्षिरमितद्युतिः ॥ ००३ ॥

सभास्थान्पाण्डवान्द्रष्टुं प्रीयमाणो मनोजवः ॥ ००३ ॥

तमागतमृषिं दृष्ट्वा नारदं सर्वधर्मवित् ।
सहसा पाण्डवश्रेष्ठः प्रत्युत्थायानुजैः सह ॥ ००४ ॥

अभ्यवादयत प्रीत्या विनयावनतस्तदा ॥ ००४ ॥

तदर्हमासनं तस्मै संप्रदाय यथाविधि ।
अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित् ॥ ००५ ॥

सोऽर्चितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः ।
धर्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरम् ॥ ००६ ॥

नारद उवाच ॥

कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः ।
सुखानि चानुभूयन्ते मनश्च न विहन्यते ॥ ००७ ॥

कच्चिदाचरितां पूर्वैर्नरदेव पितामहैः ।

वर्तसे वृत्तिमक्षीणां धर्मार्थसहितां नृषु ॥ ००८ ॥

कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा ।
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ॥ ००९ ॥

कच्चिदर्थं च धर्मं च कामं च जयतां वर ।
विभज्य काले कालज्ञ सदा वरद सेवसे ॥ ०१० ॥

कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथानघ ।
बलाबलं तथा सम्यक्चतुर्दश परीक्षसे ॥ ०११ ॥

कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर ।
तथा संधाय कर्माणि अष्टौ भारत सेवसे ॥ ०१२ ॥

कच्चित्प्रकृतयः षट्ते न लुप्ता भरतर्षभ ।
आढ्यास्तथाव्यसनिनः स्वनुरक्ताश्च सर्वशः ॥ ०१३ ॥

कच्चिन्न तर्कैर्दूतैर्वा ये चाप्यपरिशङ्किताः ।
त्वत्तो वा तव वामात्यैर्भिद्यते जातु मन्त्रितम् ॥ ०१४ ॥

कच्चित्संधिं यथाकालं विग्रहं चोपसेवसे ।
कच्चिद्वृत्तिमुदासीने मध्यमे चानुवर्तसे ॥ ०१५ ॥

कच्चिदात्मसमा बुद्ध्या शुचयो जीवितक्षमाः ।
कुलीनाश्चानुरक्ताश्च कृतास्ते वीर मन्त्रिणः ॥ ०१६ ॥

विजयो मन्त्रमूलो हि राज्ञां भवति भारत ।
सुसंवृतो मन्त्रधनैरमात्यैः शास्त्रकोविदैः ॥ ०१७ ॥

कच्चिन्निद्रावशं नैषि कच्चित्काले विबुध्यसे ।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् ॥ ०१८ ॥

कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।
कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रमनुधावति ॥ ०१९ ॥

कच्चिदर्थान्विनिश्चित्य लघुमूलान्महोदयान् ।
क्षिप्रमारभसे कर्तुं न विघ्नयसि तादृशान् ॥ ०२० ॥

कच्चिन्न सर्वे कर्मान्ताः परोक्षास्ते विशङ्किताः ।
सर्वे वा पुनरुत्सृष्टाः संसृष्टं ह्यत्र कारणम् ॥ ०२१ ॥

कच्चिद्राजन्कृतान्येव कृतप्रायाणि वा पुनः ।
विदुस्ते वीर कर्माणि नानवाप्तानि कानिचित् ॥ ०२२ ॥

कच्चित्कारणिकाः सर्वे सर्वशास्त्रेषु कोविदाः ।
कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः ॥ ०२३ ॥

कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् ॥ ०२४ ॥

कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः ।
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ ०२५ ॥

एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ ०२६ ॥

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ०२७ ॥

कच्चिद्द्विषामविदितः प्रतियत्तश्च सर्वदा ।
नित्ययुक्तो रिपून्सर्वान्वीक्षसे रिपुसूदन ॥ ०२८ ॥

कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुप्रष्टा सत्कृतस्ते पुरोहितः ॥ ०२९ ॥

कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः ।
हुतं च होष्यमाणं च काले वेदयते सदा ॥ ०३० ॥

कच्चिदङ्गेषु निष्णातो ज्योतिषां प्रतिपादकः ।
उत्पातेषु च सर्वेषु दैवज्ञः कुशलस्तव ॥ ०३१ ॥

कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ।
जघन्याश्च जघन्येषु भृत्याः कर्मसु योजिताः ॥ ०३२ ॥

अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् ।
श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ ०३३ ॥

कच्चिन्नोग्रेण दण्डेन भृशमुद्वेजितप्रजाः ।
राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ ॥ ०३४ ॥

कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा ।
उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ ०३५ ॥

कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमाञ्शुचिः ।
कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव ॥ ०३६ ॥

कच्चिद्बलस्य ते मुख्याः सर्वे युद्धविशारदाः ।
दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ॥ ०३७ ॥

कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ।
संप्राप्तकालं दातव्यं ददासि न विकर्षसि ॥ ०३८ ॥

कालातिक्रमणाद्ध्येते भक्तवेतनयोर्भृताः ।

भर्तुः कुप्यन्ति दौर्गत्यात्सोऽनर्थः सुमहान्स्मृतः ॥ ०३९ ॥

कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः ।
कच्चित्प्राणांस्तवार्थेषु संत्यजन्ति सदा युधि ॥ ०४० ॥

कच्चिन्नैको बहूनर्थान्सर्वशः सांपरायिकान् ।
अनुशास्सि यथाकामं कामात्मा शासनातिगः ॥ ०४१ ॥

कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन् ।
लभते मानमधिकं भूयो वा भक्तवेतनम् ॥ ०४२ ॥

कच्चिद्विद्याविनीतांश्च नराञ्ज्ञानविशारदान् ।
यथार्हं गुणतश्चैव दानेनाभ्यवपद्यसे ॥ ०४३ ॥

कच्चिद्दारान्मनुष्याणां तवार्थे मृत्युमेयुषाम् ।
व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ ०४४ ॥

कच्चिद्भयादुपनतं क्लीबं वा रिपुमागतम् ।
युद्धे वा विजितं पार्थ पुत्रवत्परिरक्षसि ॥ ०४५ ॥

कच्चित्त्वमेव सर्वस्याः पृथिव्याः पृथिवीपते ।
समश्च नाभिशङ्क्यश्च यथा माता यथा पिता ॥ ०४६ ॥

कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ ।
अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् ॥ ०४७ ॥

पार्ष्णिमूलं च विज्ञाय व्यवसायं पराजयम् ।
बलस्य च महाराज दत्त्वा वेतनमग्रतः ॥ ०४८ ॥

कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परंतप ।
उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः ॥ ०४९ ॥

कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः ।
पराञ्जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान् ॥ ०५० ॥

कच्चित्ते यास्यतः शत्रून्पूर्वं यान्ति स्वनुष्ठिताः ।
साम दानं च भेदश्च दण्डश्च विधिवद्गुणाः ॥ ०५१ ॥

कच्चिन्मूलं दृढं कृत्वा यात्रां यासि विशां पते ।
तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि ॥ ०५२ ॥

कच्चिदष्टाङ्गसंयुक्ता चतुर्विधबला चमूः ।
बलमुख्यैः सुनीता ते द्विषतां प्रतिबाधनी ॥ ०५३ ॥

कच्चिल्लवं च मुष्टिं च परराष्ट्रे परंतप ।
अविहाय महाराज विहंसि समरे रिपून् ॥ ०५४ ॥

कच्चित्स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव ।
अर्थान्समनुतिष्ठन्ति रक्षन्ति च परस्परम् ॥ ०५५ ॥

कच्चिदभ्यवहार्याणि गात्रसंस्पर्शकानि च ।
घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव ॥ ०५६ ॥

कच्चित्कोशं च कोष्ठं च वाहनं द्वारमायुधम् ।
आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ॥ ०५७ ॥

कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशां पते ।
रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान् ॥ ०५८ ॥

कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च ।
प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव ॥ ०५९ ॥

कच्चिदायस्य चार्धेन चतुर्भागेन वा पुनः ।
पादभागैस्त्रिभिर्वापि व्ययः संशोध्यते तव ॥ ०६० ॥

कच्चिज्ज्ञातीन्गुरून्वृद्धान्वणिजः शिल्पिनः श्रितान् ।
अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् ॥ ०६१ ॥

कच्चिदायव्यये युक्ताः सर्वे गणकलेखकाः ।
अनुतिष्ठन्ति पूर्वाह्णे नित्यमायव्ययं तव ॥ ०६२ ॥

कच्चिदर्थेषु संप्रौढान्हितकामाननुप्रियान् ।
नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् ॥ ०६३ ॥

कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् ।
त्वं कर्मस्वनुरूपेषु नियोजयसि भारत ॥ ०६४ ॥

कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशां पते ।
अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ॥ ०६५ ॥

कच्चिन्न लुब्धैश्चौरैर्वा कुमारैः स्त्रीबलेन वा ।
त्वया वा पीड्यते राष्ट्रं कच्चित्पुष्टाः कृषीवलाः ॥ ०६६ ॥

कच्चिद्राष्ट्रे तडागानि पूर्णानि च महान्ति च ।
भागशो विनिविष्टानि न कृषिर्देवमातृका ॥ ०६७ ॥

कच्चिद्बीजं च भक्तं च कर्षकायावसीदते ।
प्रतिकं च शतं वृद्ध्या ददास्यृणमनुग्रहम् ॥ ०६८ ॥

कच्चित्स्वनुष्ठिता तात वार्त्ता ते साधुभिर्जनैः ।
वार्त्तायां संश्रितस्तात लोकोऽयं सुखमेधते ॥ ०६९ ॥

कच्चिच्छुचिकृतः प्राज्ञाः पञ्च पञ्च स्वनुष्ठिताः ।

क्षेमं कुर्वन्ति संहत्य राजञ्जनपदे तव ॥ ०७० ॥

कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत्कृताः ।
ग्रामवच्च कृता रक्षा ते च सर्वे तदर्पणाः ॥ ०७१ ॥

कच्चिद्बलेनानुगताः समानि विषमाणि च ।
पुराणचौराः साध्यक्षाश्चरन्ति विषये तव ॥ ०७२ ॥

कच्चित्स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः ।
कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥ ०७३ ॥

कच्चिच्चारान्निशि श्रुत्वा तत्कार्यमनुचिन्त्य च ।
प्रियाण्यनुभवञ्शेषे विदित्वाभ्यन्तरं जनम् ॥ ०७४ ॥

कच्चिद्द्वौ प्रथमौ यामौ रात्र्यां सुप्त्वा विशां पते ।
सञ्चिन्तयसि धर्मार्थौ याम उत्थाय पश्चिमे ॥ ०७५ ॥

कच्चिद्दर्शयसे नित्यं मनुष्यान्समलङ्कृतान् ।
उत्थाय काले कालज्ञः सह पाण्डव मन्त्रिभिः ॥ ०७६ ॥

कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलङ्कृताः ।
अभितस्त्वामुपासन्ते रक्षणार्थमरिंदम ॥ ०७७ ॥

कच्चिद्दण्ड्येषु यमवत्पूज्येषु च विशां पते ।
परीक्ष्य वर्तसे सम्यगप्रियेषु प्रियेषु च ॥ ०७८ ॥

कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा ।
मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि ॥ ०७९ ॥

कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः ।
सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा ॥ ०८० ॥

कच्चिन्न मानान्मोहाद्वा कामाद्वापि विशां पते ।
अर्थिप्रत्यर्थिनः प्राप्तानपास्यसि कथञ्चन ॥ ०८१ ॥

कच्चिन्न लोभान्मोहाद्वा विश्रम्भात्प्रणयेन वा ।
आश्रितानां मनुष्याणां वृत्तिं त्वं संरुणत्सि च ॥ ०८२ ॥

कच्चित्पौरा न सहिता ये च ते राष्ट्रवासिनः ।
त्वया सह विरुध्यन्ते परैः क्रीताः कथञ्चन ॥ ०८३ ॥

कच्चित्ते दुर्बलः शत्रुर्बलेनोपनिपीडितः ।
मन्त्रेण बलवान्कश्चिदुभाभ्यां वा युधिष्ठिर ॥ ०८४ ॥

कच्चित्सर्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः ।
कच्चित्प्राणांस्त्वदर्थेषु संत्यजन्ति त्वया हृताः ॥ ०८५ ॥

कच्चित्ते सर्वविद्यासु गुणतोऽर्चा प्रवर्तते ।
ब्राह्मणानां च साधूनां तव निःश्रेयसे शुभा ॥ ०८६ ॥

कच्चिद्धर्मे त्रयीमूले पूर्वैराचरिते जनैः ।
वर्तमानस्तथा कर्तुं तस्मिन्कर्मणि वर्तसे ॥ ०८७ ॥

कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः ।
गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् ॥ ०८८ ॥

कच्चित्क्रतूनेकचित्तो वाजपेयांश्च सर्वशः ।
पुण्डरीकांश्च कार्त्स्न्येन यतसे कर्तुमात्मवान् ॥ ०८९ ॥

कच्चिज्ज्ञातीन्गुरून्वृद्धान्दैवतांस्तापसानपि ।
चैत्यांश्च वृक्षान्कल्याणान्ब्राह्मणांश्च नमस्यसि ॥ ०९० ॥

कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ ।
आयुष्या च यशस्या च धर्मकामार्थदर्शिनी ॥ ०९१ ॥

एतया वर्तमानस्य बुद्ध्या राष्ट्रं न सीदति ।
विजित्य च महीं राजा सोऽत्यन्तं सुखमेधते ॥ ०९२ ॥

कच्चिदार्यो विशुद्धात्मा क्षारितश्चौरकर्मणि ।
अदृष्टशास्त्रकुशलैर्न लोभाद्वध्यते शुचिः ॥ ०९३ ॥

पृष्टो गृहीतस्तत्कारी तज्ज्ञैर्दृष्टः सकारणः ।
कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ॥ ०९४ ॥

व्युत्पन्ने कच्चिदाढ्यस्य दरिद्रस्य च भारत ।
अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः ॥ ०९५ ॥

नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।
अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्तताम् ॥ ०९६ ॥

एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् ।
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥ ०९७ ॥

मङ्गल्यस्याप्रयोगं च प्रसङ्गं विषयेषु च ।
कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ॥ ०९८ ॥

कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम् ।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥ ०९९ ॥

युधिष्ठिर उवाच ॥

कथं वै सफला वेदाः कथं वै सफलं धनम् ।
कथं वै सफला दाराः कथं वै सफलं श्रुतम् ॥ १०० ॥

नारद उवाच ॥

अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ।
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥ १०१ ॥

वैशंपायन उवाच ॥

एतदाख्याय स मुनिर्नारदः सुमहातपाः ।
पप्रच्छानन्तरमिदं धर्मात्मानं युधिष्ठिरम् ॥ १०२ ॥

नारद उवाच ॥

कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् ।
यथोक्तमवहार्यन्ते शुल्कं शुल्कोपजीविभिः ॥ १०३ ॥

कच्चित्ते पुरुषा राजन्पुरे राष्ट्रे च मानिताः ।
उपानयन्ति पण्यानि उपधाभिरवञ्चिताः ॥ १०४ ॥

कच्चिच्छृणोषि वृद्धानां धर्मार्थसहिता गिरः ।
नित्यमर्थविदां तात तथा धर्मानुदर्शिनाम् ॥ १०५ ॥

कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च ।
धर्मार्थं च द्विजातिभ्यो दीयते मधुसर्पिषी ॥ १०६ ॥

द्रव्योपकरणं कच्चित्सर्वदा सर्वशिल्पिनाम् ।
चातुर्मास्यावरं सम्यङ्नियतं संप्रयच्छसि ॥ १०७ ॥

कच्चित्कृतं विजानीषे कर्तारं च प्रशंससि ।
सतां मध्ये महाराज सत्करोषि च पूजयन् ॥ १०८ ॥

कच्चित्सूत्राणि सर्वाणि गृह्णासि भरतर्षभ ।
हस्तिसूत्राश्वसूत्राणि रथसूत्राणि चाभिभो ॥ १०९ ॥

कच्चिदभ्यस्यते शश्वद्गृहे ते भरतर्षभ ।
धनुर्वेदस्य सूत्रं च यन्त्रसूत्रं च नागरम् ॥ ११० ॥

कच्चिदस्त्राणि सर्वाणि ब्रह्मदण्डश्च तेऽनघ ।
विषयोगाश्च ते सर्वे विदिताः शत्रुनाशनाः ॥ १११ ॥

कच्चिदग्निभयाच्चैव सर्पव्यालभयात्तथा ।
रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ॥ ११२ ॥

कच्चिदन्धांश्च मूकांश्च पङ्गून्व्यङ्गानबान्धवान् ।
पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ॥ ११३ ॥

वैशंपायन उवाच ॥

एताः कुरूणामृषभो महात्मा ; श्रुत्वा गिरो ब्राह्मणसत्तमस्य ।
प्रणम्य पादावभिवाद्य हृष्टो ; राजाब्रवीन्नारदं देवरूपम् ॥ ११४ ॥

एवं करिष्यामि यथा त्वयोक्तं ; प्रज्ञा हि मे भूय एवाभिवृद्धा ।
उक्त्वा तथा चैव चकार राजा ; लेभे महीं सागरमेखलां च ॥ ११५ ॥

नारद उवाच ॥

एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे ।
स विहृत्येह सुसुखी शक्रस्यैति सलोकताम् ॥ ११६ ॥

# अध्याय ००६

वैशंपायन उवाच ॥

संपूज्याथाभ्यनुज्ञातो महर्षेर्वचनात्परम् ।
प्रत्युवाचानुपूर्व्येण धर्मराजो युधिष्ठिरः ॥ ००१ ॥

भगवन्न्याय्यमाहैतं यथावद्धर्मनिश्चयम् ।
यथाशक्ति यथान्यायं क्रियतेऽयं विधिर्मया ॥ ००२ ॥

राजभिर्यद्यथा कार्यं पुरा तत्तन्न संशयः ।
यथान्यायोपनीतार्थं कृतं हेतुमदर्थवत् ॥ ००३ ॥

वयं तु सत्पथं तेषां यातुमिच्छामहे प्रभो ।
न तु शक्यं तथा गन्तुं यथा तैर्नियतात्मभिः ॥ ००४ ॥

एवमुक्त्वा स धर्मात्मा वाक्यं तदभिपूज्य च ।
मुहूर्तात्प्राप्तकालं च दृष्ट्वा लोकचरं मुनिम् ॥ ००५ ॥

नारदं स्वस्थमासीनमुपासीनो युधिष्ठिरः ।
अपृच्छत्पाण्डवस्तत्र राजमध्ये महामतिः ॥ ००६ ॥

भवान्सञ्चरते लोकान्सदा नानाविधान्बहून् ।
ब्रह्मणा निर्मितान्पूर्वं प्रेक्षमाणो मनोजवः ॥ ००७ ॥

ईदृशी भवता काचिद्दृष्टपूर्वा सभा क्वचित् ।
इतो वा श्रेयसी ब्रह्मंस्तन्ममाचक्ष्व पृच्छतः ॥ ००८ ॥

तच्छ्रुत्वा नारदस्तस्य धर्मराजस्य भाषितम् ।
पाण्डवं प्रत्युवाचेदं स्मयन्मधुरया गिरा ॥ ००९ ॥

मानुषेषु न मे तात दृष्टपूर्वा न च श्रुता ।
सभा मणिमयी राजन्यथेयं तव भारत ॥ ०१० ॥

सभां तु पितृराजस्य वरुणस्य च धीमतः ।
कथयिष्ये तथेन्द्रस्य कैलासनिलयस्य च ॥ ०११ ॥

ब्रह्मणश्च सभां दिव्यां कथयिष्ये गतक्लमाम् ।
यदि ते श्रवणे बुद्धिर्वर्तते भरतर्षभ ॥ ०१२ ॥

नारदेनैवमुक्तस्तु धर्मराजो युधिष्ठिरः ।
प्राञ्जलिर्भ्रातृभिः सार्धं तैश्च सर्वैर्नृपैर्वृतः ॥ ०१३ ॥

नारदं प्रत्युवाचेदं धर्मराजो महामनाः ।
सभाः कथय ताः सर्वाः श्रोतुमिच्छामहे वयम् ॥ ०१४ ॥

किंद्रव्यास्ताः सभा ब्रह्मन्किंविस्ताराः किमायताः ।
पितामहं च के तस्यां सभायां पर्युपासते ॥ ०१५ ॥

वासवं देवराजं च यमं वैवस्वतं च के ।
वरुणं च कुबेरं च सभायां पर्युपासते ॥ ०१६ ॥

एतत्सर्वं यथातत्त्वं देवर्षे वदतस्तव ।
श्रोतुमिच्छाम सहिताः परं कौतूहलं हि नः ॥ ०१७ ॥

एवमुक्तः पाण्डवेन नारदः प्रत्युवाच तम् ।
क्रमेण राजन्दिव्यास्ताः श्रूयन्तामिह नः सभाः ॥ ०१८ ॥

# अध्याय ००७

नारद उवाच ॥

शक्रस्य तु सभा दिव्या भास्वरा कर्मभिर्जिता ।
स्वयं शक्रेण कौरव्य निर्मितार्कसमप्रभा ॥ ००१ ॥

विस्तीर्णा योजनशतं शतमध्यर्धमायता ।
वैहायसी कामगमा पञ्चयोजनमुच्छ्रिता ॥ ००२ ॥

जराशोकक्लमापेता निरातङ्का शिवा शुभा ।
वेश्मासनवती रम्या दिव्यपादपशोभिता ॥ ००३ ॥

तस्यां देवेश्वरः पार्थ सभायां परमासने ।
आस्ते शच्या महेन्द्राण्या श्रिया लक्ष्म्या च भारत ॥ ००४ ॥

बिभ्रद्वपुरनिर्देश्यं किरीटी लोहिताङ्गदः ।
विरजोम्बरश्चित्रमाल्यो ह्रीकीर्तिद्युतिभिः सह ॥ ००५ ॥

तस्यामुपासते नित्यं महात्मानं शतक्रतुम् ।
मरुतः सर्वतो राजन्सर्वे च गृहमेधिनः ॥ ००६ ॥

सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा ॥ ००६ ॥

एते सानुचराः सर्वे दिव्यरूपाः स्वलङ्कृताः ।
उपासते महात्मानं देवराजमरिंदमम् ॥ ००७ ॥

तथा देवर्षयः सर्वे पार्थ शक्रमुपासते ।
अमला धूतपाप्मानो दीप्यमाना इवाग्नयः ॥ ००८ ॥

तेजस्विनः सोमयुजो विपापा विगतक्लमाः ॥ ००८ ॥

पराशरः पर्वतश्च तथा सावर्णिगालवौ ।
शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः ॥ ००९ ॥

दुर्वासाश्च दीर्घतपा याज्ञवल्क्योऽथ भालुकिः ।
उद्दालकः श्वेतकेतुस्तथा शाट्यायनः प्रभुः ॥ ०१० ॥

हविष्मांश्च गविष्ठश्च हरिश्चन्द्रश्च पार्थिवः ।
हृद्यश्चोदरशाण्डिल्यः पाराशर्यः कृषीवलः ॥ ०११ ॥

वातस्कन्धो विशाखश्च विधाता काल एव च ।
अनन्तदन्तस्त्वष्टा च विश्वकर्मा च तुम्बुरुः ॥ ०१२ ॥

अयोनिजा योनिजाश्च वायुभक्षा हुताशिनः ।
ईशानं सर्वलोकस्य वज्रिणं समुपासते ॥ ०१३ ॥

सहदेवः सुनीथश्च वाल्मीकिश्च महातपाः ।
समीकः सत्यवांश्चैव प्रचेताः सत्यसङ्गरः ॥ ०१४ ॥

मेधातिथिर्वामदेवः पुलस्त्यः पुलहः क्रतुः ।
मरुत्तश्च मरीचिश्च स्थाणुश्चात्रिर्महातपाः ॥ ०१५ ॥

कक्षीवान्गौतमस्तार्क्ष्यस्तथा वैश्वानरो मुनिः ।
मुनिः कालकवृक्षीय आश्राव्योऽथ हिरण्यदः ॥ ०१६ ॥

संवर्तो देवहव्यश्च विष्वक्सेनश्च वीर्यवान् ॥ ०१६ ॥

दिव्या आपस्तथौषध्यः श्रद्धा मेधा सरस्वती ।
अर्थो धर्मश्च कामश्च विद्युतश्चापि पाण्डव ॥ ०१७ ॥

जलवाहास्तथा मेघा वायवः स्तनयित्नवः ।

प्राची दिग्यज्ञवाहाश्च पावकाः सप्तविंशतिः ॥ ०१८ ॥

अग्नीषोमौ तथेन्द्राग्नी मित्रोऽथ सवितार्यमा ।
भगो विश्वे च साध्याश्च शुक्रो मन्थी च भारत ॥ ०१९ ॥

यज्ञाश्च दक्षिणाश्चैव ग्रहाः स्तोभाश्च सर्वशः ।
यज्ञवाहाश्च ये मन्त्राः सर्वे तत्र समासते ॥ ०२० ॥

तथैवाप्सरसो राजन्गन्धर्वाश्च मनोरमाः ।
नृत्यवादित्रगीतैश्च हास्यैश्च विविधैरपि ॥ ०२१ ॥

रमयन्ति स्म नृपते देवराजं शतक्रतुम् ॥ ०२१ ॥

स्तुतिभिर्मङ्गलैश्चैव स्तुवन्तः कर्मभिस्तथा ।
विक्रमैश्च महात्मानं बलवृत्रनिषूदनम् ॥ ०२२ ॥

ब्रह्मराजर्षयः सर्वे सर्वे देवर्षयस्तथा ।
विमानैर्विविधैर्दिव्यैर्भ्राजमानैरिवाग्निभिः ॥ ०२३ ॥

स्रग्विणो भूषिताश्चान्ये यान्ति चायान्ति चापरे ।
बृहस्पतिश्च शुक्रश्च तस्यामाययतुः सह ॥ ०२४ ॥

एते चान्ये च बहवो यतात्मानो यतव्रताः ।
विमानैश्चन्द्रसङ्काशैः सोमवत्प्रियदर्शनाः ॥ ०२५ ॥

ब्रह्मणो वचनाद्राजन्भृगुः सप्तर्षयस्तथा ॥ ०२५ ॥

एषा सभा मया राजन्दृष्टा पुष्करमालिनी ।
शतक्रतोर्महाराज याम्यां शृणु ममानघ ॥ ०२६ ॥

# अध्याय ००८

नारद उवाच ॥

कथयिष्ये सभां दिव्यां युधिष्ठिर निबोध ताम् ।
वैवस्वतस्य यामर्थे विश्वकर्मा चकार ह ॥ ००१ ॥

तैजसी सा सभा राजन्बभूव शतयोजना ।
विस्तारायामसंपन्ना भूयसी चापि पाण्डव ॥ ००२ ॥

अर्कप्रकाशा भ्राजिष्णुः सर्वतः कामचारिणी ।
नैवातिशीता नात्युष्णा मनसश्च प्रहर्षिणी ॥ ००३ ॥

न शोको न जरा तस्यां क्षुत्पिपासे न चाप्रियम् ।
न च दैन्यं क्लमो वापि प्रतिकूलं न चाप्युत ॥ ००४ ॥

सर्वे कामाः स्थितास्तस्यां ये दिव्या ये च मानुषाः ।
रसवच्च प्रभूतं च भक्ष्यभोज्यमरिंदम ॥ ००५ ॥

पुण्यगन्धाः स्रजस्तत्र नित्यपुष्पफलद्रुमाः ।
रसवन्ति च तोयानि शीतान्युष्णानि चैव ह ॥ ००६ ॥

तस्यां राजर्षयः पुण्यास्तथा ब्रह्मर्षयोऽमलाः ।
यमं वैवस्वतं तात प्रहृष्टाः पर्युपासते ॥ ००७ ॥

ययातिर्नहुषः पूरुर्मान्धाता सोमको नृगः ।
त्रसदस्युश्च तुरयः कृतवीर्यः श्रुतश्रवाः ॥ ००८ ॥

अरिप्रणुत्सुसिंहश्च कृतवेगः कृतिर्निमिः ।
प्रतर्दनः शिबिर्मत्स्यः पृथ्वक्षोऽथ बृहद्रथः ॥ ००९ ॥

ऐडो मरुत्तः कुशिकः साङ्काश्यः साङ्कृतिर्भवः ।
चतुरश्वः सदश्वोर्मिः कार्तवीर्यश्च पार्थिवः ॥ ०१० ॥

भरतस्तथा सुरथः सुनीथो नैषधो नलः ।
दिवोदासोऽथ सुमना अम्बरीषो भगीरथः ॥ ०११ ॥

व्यश्वः सदश्वो वध्र्यश्वः पञ्चहस्तः पृथुश्रवाः ।
रुषद्गुर्वृषसेनश्च क्षुपश्च सुमहाबलः ॥ ०१२ ॥

रुषदश्वो वसुमनाः पुरुकुत्सो ध्वजी रथी ।
आर्ष्टिषेणो दिलीपश्च महात्मा चाप्युशीनरः ॥ ०१३ ॥

औशीनरः पुण्डरीकः शर्यातिः शरभः शुचिः ।
अङ्गोऽरिष्टश्च वेनश्च दुःषन्तः सञ्जयो जयः ॥ ०१४ ॥

भाङ्गास्वरिः सुनीथश्च निषधोऽथ त्विषीरथः ।
करंधमो बाह्लिकश्च सुद्युम्नो बलवान्मधुः ॥ ०१५ ॥

कपोतरोमा तृणकः सहदेवार्जुनौ तथा ।
रामो दाशरथिश्चैव लक्ष्मणोऽथ प्रतर्दनः ॥ ०१६ ॥

अलर्कः कक्षसेनश्च गयो गौराश्व एव च ।
जामदग्न्योऽथ रामोऽत्र नाभागसगरौ तथा ॥ ०१७ ॥

भूरिद्युम्नो महाश्वश्च पृथ्वश्वो जनकस्तथा ।
वैन्यो राजा वारिषेणः पुरुजो जनमेजयः ॥ ०१८ ॥

ब्रह्मदत्तस्त्रिगर्तश्च राजोपरिचरस्तथा ।

इन्द्रद्युम्नो भीमजानुर्गयः पृष्ठो नयोऽनघः ॥ ०१९ ॥

पद्मोऽथ मुचुकुन्दश्च भूरिद्युम्नः प्रसेनजित् ।
अरिष्टनेमिः प्रद्युम्नः पृथगश्वोऽजकस्तथा ॥ ०२० ॥

शतं मत्स्या नृपतयः शतं नीपाः शतं हयाः ।
धृतराष्ट्राश्चैकशतमशीतिर्जनमेजयाः ॥ ०२१ ॥

शतं च ब्रह्मदत्तानामीरिणां वैरिणां शतम् ।
शंतनुश्चैव राजर्षिः पाण्डुश्चैव पिता तव ॥ ०२२ ॥

उशद्गवः शतरथो देवराजो जयद्रथः ।
वृषादर्भिश्च राजर्षिर्धाम्ना सह समन्त्रिणा ॥ ०२३ ॥

अथापरे सहस्राणि ये गताः शशबिन्दवः ।
इष्ट्वाश्वमेधैर्बहुभिर्महद्भिर्भूरिदक्षिणैः ॥ ०२४ ॥

एते राजर्षयः पुण्याः कीर्तिमन्तो बहुश्रुताः ।
तस्यां सभायां राजर्षे वैवस्वतमुपासते ॥ ०२५ ॥

अगस्त्योऽथ मतङ्गश्च कालो मृत्युस्तथैव च ।
यज्वानश्चैव सिद्धाश्च ये च योगशरीरिणः ॥ ०२६ ॥

अग्निष्वात्ताश्च पितरः फेनपाश्चोष्मपाश्च ये ।
स्वधावन्तो बर्हिषदो मूर्तिमन्तस्तथापरे ॥ ०२७ ॥

कालचक्रं च साक्षाच्च भगवान्हव्यवाहनः ।
नरा दुष्कृतकर्माणो दक्षिणायनमृत्यवः ॥ ०२८ ॥

कालस्य नयने युक्ता यमस्य पुरुषाश्च ये ।
तस्यां शिंशपपालाशास्तथा काशकुशादयः ॥ ०२९ ॥

उपासते धर्मराजं मूर्तिमन्तो निरामयाः ॥ ०२९ ॥

एते चान्ये च बहवः पितृराजसभासदः ।
अशक्याः परिसंख्यातुं नामभिः कर्मभिस्तथा ॥ ०३० ॥

असंबाधा हि सा पार्थ रम्या कामगमा सभा ।
दीर्घकालं तपस्तप्त्वा निर्मिता विश्वकर्मणा ॥ ०३१ ॥

प्रभासन्ती ज्वलन्तीव तेजसा स्वेन भारत ।
तामुग्रतपसो यान्ति सुव्रताः सत्यवादिनः ॥ ०३२ ॥

शान्ताः संन्यासिनः सिद्धाः पूताः पुण्येन कर्मणा ।
सर्वे भास्वरदेहाश्च सर्वे च विरजोम्बराः ॥ ०३३ ॥

चित्राङ्गदाश्चित्रमाल्याः सर्वे ज्वलितकुण्डलाः ।
सुकृतैः कर्मभिः पुण्यैः परिबर्हैर्विभूषिताः ॥ ०३४ ॥

गन्धर्वाश्च महात्मानः शतशश्चाप्सरोगणाः ।
वादित्रं नृत्तगीतं च हास्यं लास्यं च सर्वशः ॥ ०३५ ॥

पुण्याश्च गन्धाः शब्दाश्च तस्यां पार्थ समन्ततः ।
दिव्यानि माल्यानि च तामुपतिष्ठन्ति सर्वशः ॥ ०३६ ॥

शतं शतसहस्राणि धर्मिणां तं प्रजेश्वरम् ।
उपासते महात्मानं रूपयुक्ता मनस्विनः ॥ ०३७ ॥

ईदृशी सा सभा राजन्पितृराज्ञो महात्मनः ।
वरुणस्यापि वक्ष्यामि सभां पुष्करमालिनीम् ॥ ०३८ ॥

# अध्याय ००९

नारद उवाच ॥

युधिष्ठिर सभा दिव्या वरुणस्य सितप्रभा ।
प्रमाणेन यथा याम्या शुभप्राकारतोरणा ॥ ००१ ॥

अन्तःसलिलमास्थाय विहिता विश्वकर्मणा ।
दिव्यरत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युता ॥ ००२ ॥

नीलपीतासितश्यामैः सितैर्लोहितकैरपि ।
अवतानैस्तथा गुल्मैः पुष्पमञ्जरिधारिभिः ॥ ००३ ॥

तथा शकुनयस्तस्यां नानारूपा मृदुस्वराः ।
अनिर्देश्या वपुष्मन्तः शतशोऽथ सहस्रशः ॥ ००४ ॥

सा सभा सुखसंस्पर्शा न शीता न च घर्मदा ।
वेश्मासनवती रम्या सिता वरुणपालिता ॥ ००५ ॥

यस्यामास्ते स वरुणो वारुण्या सह भारत ।
दिव्यरत्नाम्बरधरो भूषणैरुपशोभितः ॥ ००६ ॥

स्रग्विणो भूषिताश्चापि दिव्यमाल्यानुकर्षिणः ।
आदित्यास्तत्र वरुणं जलेश्वरमुपासते ॥ ००७ ॥

वासुकिस्तक्षकश्चैव नागश्चैरावतस्तथा ।
कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्यवान् ॥ ००८ ॥

कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ ।

मणिमान्कुण्डलधरः कर्कोटकधनञ्जयौ ॥ ००९ ॥

प्रह्लादो मूषिकादश्च तथैव जनमेजयः ।
पताकिनो मण्डलिनः फणवन्तश्च सर्वशः ॥ ०१० ॥

एते चान्ये च बहवः सर्पास्तस्यां युधिष्ठिर ।
उपासते महात्मानं वरुणं विगतक्लमाः ॥ ०११ ॥

बलिर्वैरोचनो राजा नरकः पृथिवीञ्जयः ।
प्रह्लादो विप्रचित्तिश्च कालखञ्जाश्च सर्वशः ॥ ०१२ ॥

सुहनुर्दुर्मुखः शङ्खः सुमनाः सुमतिः स्वनः ।
घटोदरो महापार्श्वः क्रथनः पिठरस्तथा ॥ ०१३ ॥

विश्वरूपः सुरूपश्च विरूपोऽथ महाशिराः ।
दशग्रीवश्च वाली च मेघवासा दशावरः ॥ ०१४ ॥

कैटभो विटटूतश्च संह्रादश्चेन्द्रतापनः ।
दैत्यदानवसंघाश्च सर्वे रुचिरकुण्डलाः ॥ ०१५ ॥

स्रग्विणो मौलिनः सर्वे तथा दिव्यपरिच्छदाः ।
सर्वे लब्धवराः शूराः सर्वे विगतमृत्यवः ॥ ०१६ ॥

ते तस्यां वरुणं देवं धर्मपाशस्थिताः सदा ।
उपासते महात्मानं सर्वे सुचरितव्रताः ॥ ०१७ ॥

तथा समुद्राश्चत्वारो नदी भागीरथी च या ।
कालिन्दी विदिशा वेण्णा नर्मदा वेगवाहिनी ॥ ०१८ ॥

विपाशा च शतद्रुश्च चन्द्रभागा सरस्वती ।
इरावती वितस्ता च सिन्धुर्देवनदस्तथा ॥ ०१९ ॥

गोदावरी कृष्णवेण्णा कावेरी च सरिद्वरा ।
एताश्चान्याश्च सरितस्तीर्थानि च सरांसि च ॥ ०२० ॥

कूपाश्च सप्रस्रवणा देहवन्तो युधिष्ठिर ।
पल्वलानि तडागानि देहवन्त्यथ भारत ॥ ०२१ ॥

दिशस्तथा मही चैव तथा सर्वे महीधराः ।
उपासते महात्मानं सर्वे जलचरास्तथा ॥ ०२२ ॥

गीतवादित्रवन्तश्च गन्धर्वाप्सरसां गणाः ।
स्तुवन्तो वरुणं तस्यां सर्व एव समासते ॥ ०२३ ॥

महीधरा रत्नवन्तो रसा येषु प्रतिष्ठिताः ।
सर्वे विग्रहवन्तस्ते तमीश्वरमुपासते ॥ ०२४ ॥

एषा मया संपतता वारुणी भरतर्षभ ।
दृष्टपूर्वा सभा रम्या कुबेरस्य सभां श‍ृणु ॥ ०२५ ॥

---

# अध्याय ०१०

नारद उवाच ॥

सभा वैश्रवणी राजञ्शतयोजनमायता ।
विस्तीर्णा सप्ततिश्चैव योजनानि सितप्रभा ॥ ००१ ॥

तपसा निर्मिता राजन्स्वयं वैश्रवणेन सा ।
शशिप्रभा खेचरीणां कैलासशिखरोपमा ॥ ००२ ॥

गुह्यकैरुह्यमाना सा खे विषक्तेव दृश्यते ।
दिव्या हेममयैरुच्चैः पादपैरुपशोभिता ॥ ००३ ॥

रश्मिवती भास्वरा च दिव्यगन्धा मनोरमा ।
सिताभ्रशिखराकारा प्लवमानेव दृश्यते ॥ ००४ ॥

तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः ।
स्त्रीसहस्रावृतः श्रीमानास्ते ज्वलितकुण्डलः ॥ ००५ ॥

दिवाकरनिभे पुण्ये दिव्यास्तरणसंवृते ।
दिव्यपादोपधाने च निषण्णः परमासने ॥ ००६ ॥

मन्दाराणामुदाराणां वनानि सुरभीणि च ।
सौगन्धिकानां चादाय गन्धान्गन्धवहः शुचिः ॥ ००७ ॥

नलिन्याश्चालकाख्यायाश्चन्दनानां वनस्य च ।
मनोहृदयसंह्लादी वायुस्तमुपसेवते ॥ ००८ ॥

तत्र देवाः सगन्धर्वा गणैरप्सरसां वृताः ।
दिव्यतानेन गीतानि गान्ति दिव्यानि भारत ॥ ००९ ॥

मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता ।
चारुनेत्रा घृताची च मेनका पुञ्जिकस्थला ॥ ०१० ॥

विश्वाची सहजन्या च प्रम्लोचा उर्वशी इरा ।
वर्गा च सौरभेयी च समीची बुद्बुदा लता ॥ ०११ ॥

एताः सहस्रशश्चान्या नृत्तगीतविशारदाः ।
उपतिष्ठन्ति धनदं पाण्डवाप्सरसां गणाः ॥ ०१२ ॥

अनिशं दिव्यवादित्रैर्नृत्तैर्गीतैश्च सा सभा ।
अशून्या रुचिरा भाति गन्धर्वाप्सरसां गणैः ॥ ०१३ ॥

किंनरा नाम गन्धर्वा नरा नाम तथापरे ।
मणिभद्रोऽथ धनदः श्वेतभद्रश्च गुह्यकः ॥ ०१४ ॥

कशेरको गण्डकण्डुः प्रद्योतश्च महाबलः ।
कुस्तुम्बुरुः पिशाचश्च गजकर्णो विशालकः ॥ ०१५ ॥

वराहकर्णः सान्द्रोष्ठः फलभक्षः फलोदकः ।
अङ्गचूडः शिखावर्तो हेमनेत्रो विभीषणः ॥ ०१६ ॥

पुष्पाननः पिङ्गलकः शोणितोदः प्रवालकः ।
वृक्षवास्यनिकेतश्च चीरवासाश्च भारत ॥ ०१७ ॥

एते चान्ये च बहवो यक्षाः शतसहस्रशः ।
सदा भगवती च श्रीस्तथैव नलकूबरः ॥ ०१८ ॥

अहं च बहुशस्तस्यां भवन्त्यन्ये च मद्विधाः ।
आचार्याश्चाभवंस्तत्र तथा देवर्षयोऽपरे ॥ ०१९ ॥

भगवान्भूतसंघैश्च वृतः शतसहस्रशः ।
उमापतिः पशुपतिः शूलधृग्भगनेत्रहा ॥ ०२० ॥

त्र्यम्बको राजशार्दूल देवी च विगतक्लमा ।
वामनैर्विकटैः कुब्जैः क्षतजाक्षैर्मनोजवैः ॥ ०२१ ॥

मांसमेदोवसाहारैरुग्रश्रवणदर्शनैः ।
नानाप्रहरणैर्घोरैर्वातैरिव महाजवैः ॥ ०२२ ॥

वृतः सखायमन्वास्ते सदैव धनदं नृप ॥ ०२२ ॥

सा सभा तादृशी राजन्मया दृष्टान्तरिक्षगा ।
पितामहसभां राजन्कथयिष्ये गतक्लमाम् ॥ ०२३ ॥

---

# अध्याय ०११

नारद उवाच ॥

पुरा देवयुगे राजन्नादित्यो भगवान्दिवः ।
आगच्छन्मानुषं लोकं दिदृक्षुर्विगतक्लमः ॥ ००१ ॥

चरन्मानुषरूपेण सभां दृष्ट्वा स्वयंभुवः ।
सभामकथयन्मह्यं ब्राह्मीं तत्त्वेन पाण्डव ॥ ००२ ॥

अप्रमेयप्रभां दिव्यां मानसीं भरतर्षभ ।
अनिर्देश्यां प्रभावेन सर्वभूतमनोरमाम् ॥ ००३ ॥

श्रुत्वा गुणानहं तस्याः सभायाः पाण्डुनन्दन ।
दर्शनेप्सुस्तथा राजन्नादित्यमहमब्रुवम् ॥ ००४ ॥

भगवन्द्रष्टुमिच्छामि पितामहसभामहम् ।
येन सा तपसा शक्या कर्मणा वापि गोपते ॥ ००५ ॥

औषधैर्वा तथा युक्तैरुत वा मायया यया ।
तन्ममाचक्ष्व भगवन्पश्येयं तां सभां कथम् ॥ ००६ ॥

ततः स भगवान्सूर्यो मामुपादाय वीर्यवान् ।

अगच्छत्तां सभां ब्राह्मीं विपापां विगतक्लमाम् ॥ ००७ ॥

एवंरूपेति सा शक्या न निर्देष्टुं जनाधिप ।
क्षणेन हि बिभर्त्यन्यदनिर्देश्यं वपुस्तथा ॥ ००८ ॥

न वेद परिमाणं वा संस्थानं वापि भारत ।
न च रूपं मया तादृग्दृष्टपूर्वं कदाचन ॥ ००९ ॥

सुसुखा सा सभा राजन्न शीता न च घर्मदा ।
न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत ॥ ०१० ॥

नानारूपैरिव कृता सुविचित्रैः सुभास्वरैः ।
स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा ॥ ०११ ॥

अति चन्द्रं च सूर्यं च शिखिनं च स्वयंप्रभा ।
दीप्यते नाकपृष्ठस्था भासयन्तीव भास्करम् ॥ ०१२ ॥

तस्यां स भगवानास्ते विदधद्देवमायया ।
स्वयमेकोऽनिशं राज.ण्ल्लोका.ण्ल्लोकपितामहः ॥ ०१३ ॥

उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुम् ।
दक्षः प्रचेताः पुलहो मरीचिः कश्यपस्तथा ॥ ०१४ ॥

भृगुरत्रिर्वसिष्ठश्च गौतमश्च तथाङ्गिराः ।
मनोऽन्तरिक्षं विद्याश्च वायुस्तेजो जलं मही ॥ ०१५ ॥

शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च भारत ।
प्रकृतिश्च विकारश्च यच्चान्यत्कारणं भुवः ॥ ०१६ ॥

चन्द्रमाः सह नक्षत्रैरादित्यश्च गभस्तिमान् ।
वायवः क्रतवश्चैव सङ्कल्पः प्राण एव च ॥ ०१७ ॥

एते चान्ये च बहवः स्वयंभुवमुपस्थिताः ।
अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तपो दमः ॥ ०१८ ॥

आयान्ति तस्यां सहिता गन्धर्वाप्सरसस्तथा ।
विंशतिः सप्त चैवान्ये लोकपालाश्च सर्वशः ॥ ०१९ ॥

शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ।
शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च ॥ ०२० ॥

मन्त्रो रथंतरश्चैव हरिमान्वसुमानपि ।
आदित्याः साधिराजानो नानाद्वंद्वैरुदाहृताः ॥ ०२१ ॥

मरुतो विश्वकर्मा च वसवश्चैव भारत ।
तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ ॥ ०२२ ॥

ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव ।
अथर्ववेदश्च तथा पर्वाणि च विशां पते ॥ ०२३ ॥

इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः ।
ग्रहा यज्ञाश्च सोमश्च दैवतानि च सर्वशः ॥ ०२४ ॥

सावित्री दुर्गतरणी वाणी सप्तविधा तथा ।
मेधा धृतिः श्रुतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा ॥ ०२५ ॥

सामानि स्तुतिशस्त्राणि गाथाश्च विविधास्तथा ।
भाष्याणि तर्कयुक्तानि देहवन्ति विशां पते ॥ ०२६ ॥

क्षणा लवा मुहूर्ताश्च दिवा रात्रिस्तथैव च ।
अर्धमासाश्च मासाश्च ऋतवः षड्व भारत ॥ ०२७ ॥

संवत्सराः पञ्चयुगमहोरात्राश्चतुर्विधाः ।
कालचक्रं च यद्दिव्यं नित्यमक्षयमव्ययम् ॥ ०२८ ॥

अदितिर्दितिर्दनुश्चैव सुरसा विनता इरा ।
कालका सुरभिर्देवी सरमा चाथ गौतमी ॥ ०२९ ॥

आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः ॥ ०३० ॥

राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा ।
सुपर्णनागपशवः पितामहमुपासते ॥ ०३१ ॥

देवो नारायणस्तस्यां तथा देवर्षयश्च ये ।
ऋषयो वालखिल्याश्च योनिजायोनिजास्तथा ॥ ०३२ ॥

यच्च किञ्चित्त्रिलोकेऽस्मिन्दृश्यते स्थाणुजङ्गमम् ।
सर्वं तस्यां मया दृष्टं तद्विद्धि मनुजाधिप ॥ ०३३ ॥

अष्टाशीतिसहस्राणि यतीनामूर्ध्वरेतसाम् ।
प्रजावतां च पञ्चाशदृषीणामपि पाण्डव ॥ ०३४ ॥

ते स्म तत्र यथाकामं दृष्ट्वा सर्वे दिवौकसः ।
प्रणम्य शिरसा तस्मै प्रतियान्ति यथागतम् ॥ ०३५ ॥

अतिथीनागतान्देवान्दैत्यान्नागान्मुनींस्तथा ।
यक्षान्सुपर्णान्कालेयान्गन्धर्वाप्सरसस्तथा ॥ ०३६ ॥

महाभागानमितधीर्ब्रह्मा लोकपितामहः ।
दयावान्सर्वभूतेषु यथार्हं प्रतिपद्यते ॥ ०३७ ॥

प्रतिगृह्य च विश्वात्मा स्वयंभूरमितप्रभः ।

सान्त्वमानार्थसंभोगैर्युनक्ति मनुजाधिप ॥ ०३८ ॥

तथा तैरुपयातैश्च प्रतियातैश्च भारत ।
आकुला सा सभा तात भवति स्म सुखप्रदा ॥ ०३९ ॥

सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता ।
ब्राह्म्या श्रिया दीप्यमाना शुशुभे विगतक्लमा ॥ ०४० ॥

सा सभा तादृशी दृष्टा सर्वलोकेषु दुर्लभा ।
सभेयं राजशार्दूल मनुष्येषु यथा तव ॥ ०४१ ॥

एता मया दृष्टपूर्वाः सभा देवेषु पाण्डव ।
तवेयं मानुषे लोके सर्वश्रेष्ठतमा सभा ॥ ०४२ ॥

युधिष्ठिर उवाच ॥

प्रायशो राजलोकस्ते कथितो वदतां वर ।
वैवस्वतसभायां तु यथा वदसि वै प्रभो ॥ ०४३ ॥

वरुणस्य सभायां तु नागास्ते कथिता विभो ।
दैत्येन्द्राश्चैव भूयिष्ठाः सरितः सागरास्तथा ॥ ०४४ ॥

तथा धनपतेर्यक्षा गुह्यका राक्षसास्तथा ।
गन्धर्वाप्सरसश्चैव भगवांश्च वृषध्वजः ॥ ०४५ ॥

पितामहसभायां तु कथितास्ते महर्षयः ।
सर्वदेवनिकायाश्च सर्वशास्त्राणि चैव हि ॥ ०४६ ॥

शतक्रतुसभायां तु देवाः सङ्कीर्तिता मुने ।
उद्देशतश्च गन्धर्वा विविधाश्च महर्षयः ॥ ०४७ ॥

एक एव तु राजर्षिर्हरिश्चन्द्रो महामुने ।
कथितस्ते सभानित्यो देवेन्द्रस्य महात्मनः ॥ ०४८ ॥

किं कर्म तेनाचरितं तपो वा नियतव्रतम् ।
येनासौ सह शक्रेण स्पर्धते स्म महायशाः ॥ ०४९ ॥

पितृलोकगतश्चापि त्वया विप्र पिता मम ।
दृष्टः पाण्डुर्महाभागः कथं चासि समागतः ॥ ०५० ॥

किमुक्तवांश्च भगवन्नेतदिच्छामि वेदितुम् ।
त्वत्तः श्रोतुमहं सर्वं परं कौतूहलं हि मे ॥ ०५१ ॥

नारद उवाच ॥

यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो ।
तत्तेऽहं संप्रवक्ष्यामि माहात्म्यं तस्य धीमतः ॥ ०५२ ॥

स राजा बलवानासीत्सम्राड्सर्वमहीक्षिताम् ।
तस्य सर्वे महीपालाः शासनावनताः स्थिताः ॥ ०५३ ॥

तेनैकं रथमास्थाय जैत्रं हेमविभूषितम् ।
शस्त्रप्रतापेन जिता द्वीपाः सप्त नरेश्वर ॥ ०५४ ॥

स विजित्य महीं सर्वां सशैलवनकाननाम् ।
आजहार महाराज राजसूयं महाक्रतुम् ॥ ०५५ ॥

तस्य सर्वे महीपाला धनान्याजह्रुराज्ञया ।
द्विजानां परिवेष्टारस्तस्मिन्यज्ञे च तेऽभवन् ॥ ०५६ ॥

प्रादाच्च द्रविणं प्रीत्या याजकानां नरेश्वरः ।
यथोक्तं तत्र तैस्तस्मिंस्ततः पञ्चगुणाधिकम् ॥ ०५७ ॥

अतर्पयच्च विविधैर्वसुभिर्ब्राह्मणांस्तथा ।
प्रासर्पकाले संप्राप्ते नानादिग्भ्यः समागतान् ॥ ०५८ ॥

भक्ष्यैर्भोज्यैश्च विविधैर्यथाकामपुरस्कृतैः ।
रत्नौघतर्पितैस्तुष्टैर्द्विजैश्च समुदाहृतम् ॥ ०५९ ॥

तेजस्वी च यशस्वी च नृपेभ्योऽभ्यधिकोऽभवत् ॥ ०५९ ॥

एतस्मात्कारणात्पार्थ हरिश्चन्द्रो विराजते ।
तेभ्यो राजसहस्रेभ्यस्तद्विद्धि भरतर्षभ ॥ ०६० ॥

समाप्य च हरिश्चन्द्रो महायज्ञं प्रतापवान् ।
अभिषिक्तः स शुशुभे साम्राज्येन नराधिप ॥ ०६१ ॥

ये चान्येऽपि महीपाला राजसूयं महाक्रतुम् ।
यजन्ते ते महेन्द्रेण मोदन्ते सह भारत ॥ ०६२ ॥

ये चापि निधनं प्राप्ताः सङ्ग्रामेष्वपलायिनः ।
ते तत्सदः समासाद्य मोदन्ते भरतर्षभ ॥ ०६३ ॥

तपसा ये च तीव्रेण त्यजन्तीह कलेवरम् ।
तेऽपि तत्स्थानमासाद्य श्रीमन्तो भान्ति नित्यशः ॥ ०६४ ॥

पिता च त्वाह कौन्तेय पाण्डुः कौरवनन्दनः ।
हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः ॥ ०६५ ॥

समर्थोऽसि महीं जेतुं भ्रातरस्ते वशे स्थिताः ।
राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत ॥ ०६६ ॥

तस्य त्वं पुरुषव्याघ्र सङ्कल्पं कुरु पाण्डव ।

गन्तारस्ते महेन्द्रस्य पूर्वैः सह सलोकताम् ॥ ०६७ ॥

बहुविघ्नश्च नृपते क्रतुरेष स्मृतो महान् ।
छिद्राण्यत्र हि वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः ॥ ०६८ ॥

युद्धं च पृष्ठगमनं पृथिवीक्षयकारकम् ।
किञ्चिदेव निमित्तं च भवत्यत्र क्षयावहम् ॥ ०६९ ॥

एतत्सञ्चिन्त्य राजेन्द्र यत्क्षमं तत्समाचर ।
अप्रमत्तोत्थितो नित्यं चातुर्वर्ण्यस्य रक्षणे ॥ ०७० ॥

भव एधस्व मोदस्व दानैस्तर्पय च द्विजान् ॥ ०७० ॥

एतत्ते विस्तरेणोक्तं यन्मां त्वं परिपृच्छसि ।
आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति ॥ ०७१ ॥

वैशंपायन उवाच ॥

एवमाख्याय पार्थेभ्यो नारदो जनमेजय ।
जगाम तैर्वृतो राजन्नृषिभिर्यैः समागतः ॥ ०७२ ॥

गते तु नारदे पार्थो भ्रातृभिः सह कौरव ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास भारत ॥ ०७३ ॥

# मन्त्रपर्व

## अध्याय ०१२

वैशंपायन उवाच ॥

ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधिष्ठिरः ।
चिन्तयन्राजसूयाप्तिं न लेभे शर्म भारत ॥ ००१ ॥

राजर्षीणां हि तं श्रुत्वा महिमानं महात्मनाम् ।
यज्वनां कर्मभिः पुण्यैर्लोकप्राप्तिं समीक्ष्य च ॥ ००२ ॥

हरिश्चन्द्रं च राजर्षिं रोचमानं विशेषतः ।
यज्वानं यज्ञमाहर्तुं राजसूयमियेष सः ॥ ००३ ॥

युधिष्ठिरस्ततः सर्वानर्चयित्वा सभासदः ।
प्रत्यर्चितश्च तैः सर्वैर्यज्ञायैव मनो दधे ॥ ००४ ॥

स राजसूयं राजेन्द्र कुरूणामृषभः क्रतुम् ।
आहर्तुं प्रवणं चक्रे मनः सञ्चिन्त्य सोऽसकृत् ॥ ००५ ॥

भूयश्चाद्भुतवीर्यौजा धर्ममेवानुपालयन् ।
किं हितं सर्वलोकानां भवेदिति मनो दधे ॥ ००६ ॥

अनुगृह्णन्प्रजाः सर्वाः सर्वधर्मविदां वरः ।
अविशेषेण सर्वेषां हितं चक्रे युधिष्ठिरः ॥ ००७ ॥

एवं गते ततस्तस्मिन्पितरीवाश्वसञ्जनाः ।
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता ॥ ००८ ॥

स मन्त्रिणः समानाय्य भ्रातॄंश्च वदतां वरः ।
राजसूयं प्रति तदा पुनः पुनरपृच्छत ॥ ००९ ॥

ते पृच्छ्यमानाः सहिता वचोऽर्थ्यं मन्त्रिणस्तदा ।
युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् ॥ ०१० ॥

येनाभिषिक्तो नृपतिर्वारुणं गुणमृच्छति ।
तेन राजापि सन्कृत्स्नं सम्राड्गुणमभीप्सति ॥ ०११ ॥

तस्य सम्राड्गुणार्हस्य भवतः कुरुनन्दन ।
राजसूयस्य समयं मन्यन्ते सुहृदस्तव ॥ ०१२ ॥

तस्य यज्ञस्य समयः स्वाधीनः क्षत्रसंपदा ।
साम्ना षडग्नयो यस्मिंश्चीयन्ते संशितव्रतैः ॥ ०१३ ॥

दर्वीहोमानुपादाय सर्वान्यः प्राप्नुते क्रतून् ।
अभिषेकं च यज्ञान्ते सर्वजित्तेन चोच्यते ॥ ०१४ ॥

समर्थोऽसि महाबाहो सर्वे ते वशगा वयम् ।
अविचार्य महाराज राजसूये मनः कुरु ॥ ०१५ ॥

इत्येवं सुहृदः सर्वे पृथक्क सह चाब्रुवन् ।
स धर्म्यं पाण्डवस्तेषां वचः श्रुत्वा विशां पते ॥ ०१६ ॥

धृष्टमिष्टं वरिष्ठं च जग्राह मनसारिहा ॥ ०१६ ॥

श्रुत्वा सुहृद्वचस्तच्च जानंश्चाप्यात्मनः क्षमम् ।
पुनः पुनर्मनो दध्रे राजसूयाय भारत ॥ ०१७ ॥

स भ्रातृभिः पुनर्धीमानृत्विग्भिश्च महात्मभिः ।
धौम्यद्वैपायनाद्यैश्च मन्त्रयामास मन्त्रिभिः ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

इयं या राजसूयस्य सम्राडर्हस्य सुक्रतोः ।
श्रद्दधानस्य वदतः स्पृहा मे सा कथं भवेत् ॥ ०१९ ॥

वैशंपायन उवाच ॥

एवमुक्तास्तु ते तेन राज्ञा राजीवलोचन ।
इदमूचुर्वचः काले धर्मात्मानं युधिष्ठिरम् ॥ ०२० ॥

अर्हस्त्वमसि धर्मज्ञ राजसूयं महाक्रतुम् ॥ ०२० ॥

अथैवमुक्ते नृपतावृत्विग्भिर्ऋषिभिस्तथा ।
मन्त्रिणो भ्रातरश्चास्य तद्वचः प्रत्यपूजयन् ॥ ०२१ ॥

स तु राजा महाप्राज्ञः पुनरेवात्मनात्मवान् ।
भूयो विममृशे पार्थो लोकानां हितकाम्यया ॥ ०२२ ॥

सामर्थ्ययोगं संप्रेक्ष्य देशकालौ व्ययागमौ ।
विमृश्य सम्यक्क धिया कुर्वन्प्राज्ञो न सीदति ॥ ०२३ ॥

न हि यज्ञसमारम्भः केवलात्मविपत्तये ।
भवतीति समाज्ञाय यत्नतः कार्यमुद्वहन् ॥ ०२४ ॥

स निश्चयार्थं कार्यस्य कृष्णमेव जनार्दनम् ।
सर्वलोकात्परं मत्वा जगाम मनसा हरिम् ॥ ०२५ ॥

अप्रमेयं महाबाहुं कामाज्जातमजं नृषु ।
पाण्डवस्तर्कयामास कर्मभिर्देवसंमितैः ॥ ०२६ ॥

नास्य किञ्चिदविज्ञातं नास्य किञ्चिदकर्मजम् ।
न स किञ्चिन्न विषहेदिति कृष्णममन्यत ॥ ०२७ ॥

स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो युधिष्ठिरः ।
गुरुवद्भूतगुरवे प्राहिणोद्दूतमञ्जसा ॥ ०२८ ॥

शीघ्रगेन रथेनाशु स दूतः प्राप्य यादवान् ।
द्वारकावासिनं कृष्णं द्वारवत्यां समासदत् ॥ ०२९ ॥

दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्षयाच्युतः ।
इन्द्रसेनेन सहित इन्द्रप्रस्थं ययौ तदा ॥ ०३० ॥

व्यतीत्य विविधान्देशांस्त्वरावान्क्षिप्रवाहनः ।
इन्द्रप्रस्थगतं पार्थमभ्यगच्छज्जनार्दनः ॥ ०३१ ॥

स गृहे भ्रातृवद्भ्रात्रा धर्मराजेन पूजितः ।
भीमेन च ततोऽपश्यत्स्वसारं प्रीतिमान्पितुः ॥ ०३२ ॥

प्रीतः प्रियेण सुहृदा रेमे स सहितस्तदा ।
अर्जुनेन यमाभ्यां च गुरुवत्पर्युपस्थितः ॥ ०३३ ॥

तं विश्रान्तं शुभे देशे क्षणिनं कल्यमच्युतम् ।
धर्मराजः समागम्य ज्ञापयत्स्वं प्रयोजनम् ॥ ०३४ ॥

युधिष्ठिर उवाच ॥

प्रार्थितो राजसूयो मे न चासौ केवलेप्सया ।
प्राप्यते येन तत्ते ह विदितं कृष्ण सर्वशः ॥ ०३५ ॥

यस्मिन्सर्वं संभवति यश्च सर्वत्र पूज्यते ।
यश्च सर्वेश्वरो राजा राजसूयं स विन्दति ॥ ०३६ ॥

तं राजसूयं सुहृदः कार्यमाहुः समेत्य मे ।
तत्र मे निश्चिततमं तव कृष्ण गिरा भवेत् ॥ ०३७ ॥

केचिद्धि सौहृदादेव दोषं न परिचक्षते ।
अर्थहेतोस्तथैवान्ये प्रियमेव वदन्त्युत ॥ ०३८ ॥

प्रियमेव परीप्सन्ते केचिदात्मनि यद्धितम् ।
एवंप्रायाश्च दृश्यन्ते जनवादाः प्रयोजने ॥ ०३९ ॥

त्वं तु हेतूनतीत्यैतान्कामक्रोधौ व्यतीत्य च ।
परमं नः क्षमं लोके यथावद्वक्तुमर्हसि ॥ ०४० ॥

---

## अध्याय ०१३

श्रीकृष्ण उवाच ॥

सर्वैर्गुणैर्महाराज राजसूयं त्वमर्हसि ।
जानतस्त्वेव ते सर्वं किञ्चिद्वक्ष्यामि भारत ॥ ००१ ॥

जामदग्न्येन रामेण क्षत्रं यदवशेषितम् ।
तस्मादवरजं लोके यदिदं क्षत्रसञ्ज्ञितम् ॥ ००२ ॥

कृतोऽयं कुलसङ्कल्पः क्षत्रियैर्वसुधाधिप ।
निदेशवाग्भिस्तत्ते ह विदितं भरतर्षभ ॥ ००३ ॥

ऐलस्येक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते ।
राजानः श्रेणिबद्धाश्च ततोऽन्ये क्षत्रिया भुवि ॥ ००४ ॥

ऐलवंश्यास्तु ये राजंस्तथैवेक्ष्वाकवो नृपाः ।
तानि चैकशतं विद्धि कुलानि भरतर्षभ ॥ ००५ ॥

ययातेस्त्वेव भोजानां विस्तरोऽतिगुणो महान् ।
भजते च महाराज विस्तरः स चतुर्दिशम् ॥ ००६ ॥

तेषां तथैव तां लक्ष्मीं सर्वक्षत्रमुपासते ।
सोऽवनीं मध्यमां भुक्त्वा मिथोभेदेष्वमन्यत ॥ ००७ ॥

चतुर्युस्त्वपरो राजा यस्मिन्नेकशतोऽभवत् ।
स साम्राज्यं जरासंधः प्राप्तो भवति योनितः ॥ ००८ ॥

तं स राजा महाप्राज्ञ संश्रित्य किल सर्वशः ।
राजन्सेनापतिर्जातः शिशुपालः प्रतापवान् ॥ ००९ ॥

तमेव च महाराज शिष्यवत्समुपस्थितः ।
वक्रः करूषाधिपतिर्मायायोधी महाबलः ॥ ०१० ॥

अपरौ च महावीर्यौ महात्मानौ समाश्रितौ ।
जरासंधं महावीर्यं तौ हंसडिभकावुभौ ॥ ०११ ॥

दन्तवक्रः करूषश्च कलभो मेघवाहनः ।
मूर्ध्ना दिव्यं मणिं बिभ्रद्यं तं भूतमणिं विदुः ॥ ०१२ ॥

मुरं च नरकं चैव शास्ति यो यवनाधिपौ ।
अपर्यन्तबलो राजा प्रतीच्यां वरुणो यथा ॥ ०१३ ॥

भगदत्तो महाराज वृद्धस्तव पितुः सखा ।
स वाचा प्रणतस्तस्य कर्मणा चैव भारत ॥ ०१४ ॥

स्नेहबद्धस्तु पितृवन्मनसा भक्तिमांस्त्वयि ।
प्रतीच्यां दक्षिणं चान्तं पृथिव्याः पाति यो नृपः ॥ ०१५ ॥

मातुलो भवतः शूरः पुरुजित्कुन्तिवर्धनः ।
स ते संनतिमानेकः स्नेहतः शत्रुतापनः ॥ ०१६ ॥

जरासंधं गतस्त्वेवं पुरा यो न मया हतः ।
पुरुषोत्तमविज्ञातो योऽसौ चेदिषु दुर्मतिः ॥ ०१७ ॥

आत्मानं प्रतिजानाति लोकेऽस्मिन्पुरुषोत्तमम् ।
आदत्ते सततं मोहाद्यः स चिह्नं च मामकम् ॥ ०१८ ॥

वङ्गपुण्ड्रकिरातेषु राजा बलसमन्वितः ।
पौण्ड्रको वासुदेवेति योऽसौ लोकेषु विश्रुतः ॥ ०१९ ॥

चतुर्युः स महाराज भोज इन्द्रसखो बली ।
विद्याबलाद्यो व्यजयत्पाण्ड्यक्रथककैशिकान् ॥ ०२० ॥

भ्राता यस्याहृतिः शूरो जामदग्न्यसमो युधि ।
स भक्तो मागधं राजा भीष्मकः परवीरहा ॥ ०२१ ॥

प्रियाण्याचरतः प्रह्वान्सदा संबन्धिनः सतः ।
भजतो न भजत्यस्मानप्रियेषु व्यवस्थितः ॥ ०२२ ॥

न कुलं न बलं राजन्नभिजानंस्तथात्मनः ।
पश्यमानो यशो दीप्तं जरासंधमुपाश्रितः ॥ ०२३ ॥

उदीच्यभोजाश्च तथा कुलान्यष्टादशाभिभो ।
जरासंधभयादेव प्रतीचीं दिशमाश्रिताः ॥ ०२४ ॥

शूरसेना भद्रकारा बोधाः शाल्वाः पटच्चराः ।

सुस्थराश्च सुकुट्टाश्च कुणिन्दाः कुन्तिभिः सह ॥ ०२५ ॥

शाल्वेयानां च राजानः सोदर्यानुचरैः सह ।
दक्षिणा ये च पाञ्चालाः पूर्वाः कुन्तिषु कोशलाः ॥ ०२६ ॥

तथोत्तरां दिशं चापि परित्यज्य भयार्दिताः ।
मत्स्याः संन्यस्तपादाश्च दक्षिणां दिशमाश्रिताः ॥ ०२७ ॥

तथैव सर्वपाञ्चाला जरासंधभयार्दिताः ।
स्वराष्ट्रं संपरित्यज्य विद्रुताः सर्वतोदिशम् ॥ ०२८ ॥

कस्यचित्त्वथ कालस्य कंसो निर्मथ्य बान्धवान् ।
बार्हद्रथसुते देव्यावुपागच्छद्वृथामतिः ॥ ०२९ ॥

अस्तिः प्राप्तिश्च नाम्ना ते सहदेवानुजेऽबले ।
बलेन तेन स ज्ञातीनभिभूय वृथामतिः ॥ ०३० ॥

श्रैष्ठ्यं प्राप्तः स तस्यासीदतीवापनयो महान् ।
भोजराजन्यवृद्धैस्तु पीड्यमानैर्दुरात्मना ॥ ०३१ ॥

ज्ञातित्राणमभीप्सद्भिरस्मत्संभावना कृता ।
दत्त्वाक्रूराय सुतनुं तामाहुकसुतां तदा ॥ ०३२ ॥

सङ्कर्षणद्वितीयेन ज्ञातिकार्यं मया कृतम् ।
हतौ कंससुनामानौ मया रामेण चाप्युत ॥ ०३३ ॥

भये तु समुपक्रान्ते जरासंधे समुद्यते ।
मन्त्रोऽयं मन्त्रितो राजन्कुलैरष्टादशावरैः ॥ ०३४ ॥

अनारमन्तो निघ्नन्तो महास्त्रैः शतघातिभिः ।
न हन्याम वयं तस्य त्रिभिर्वर्षशतैर्बलम् ॥ ०३५ ॥

तस्य ह्यमरसङ्काशौ बलेन बलिनां वरौ ।
नामभ्यां हंसडिभकावित्यास्तां योधसत्तमौ ॥ ०३६ ॥

तावुभौ सहितौ वीरौ जरासंधश्च वीर्यवान् ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ॥ ०३७ ॥

न हि केवलमस्माकं यावन्तोऽन्ये च पार्थिवाः ।
तथैव तेषामासीच्च बुद्धिर्बुद्धिमतां वर ॥ ०३८ ॥

अथ हंस इति ख्यातः कश्चिदासीन्महान्नृपः ।
स चान्यैः सहितो राजन्सङ्ग्रामेऽष्टादशावरैः ॥ ०३९ ॥

हतो हंस इति प्रोक्तमथ केनापि भारत ।
तच्छ्रुत्वा डिभको राजन्यमुनाम्भस्यमज्जत ॥ ०४० ॥

विना हंसेन लोकेऽस्मिन्नाहं जीवितुमुत्सहे ।
इत्येतां मतिमास्थाय डिभको निधनं गतः ॥ ०४१ ॥

तथा तु डिभकं श्रुत्वा हंसः परपुरञ्जयः ।
प्रपेदे यमुनामेव सोऽपि तस्यां न्यमज्जत ॥ ०४२ ॥

तौ स राजा जरासंधः श्रुत्वाप्सु निधनं गतौ ।
स्वपुरं शूरसेनानां प्रययौ भरतर्षभ ॥ ०४३ ॥

ततो वयममित्रघ्न तस्मिन्प्रतिगते नृपे ।
पुनरानन्दिताः सर्वे मथुरायां वसामहे ॥ ०४४ ॥

यदा त्वभ्येत्य पितरं सा वै राजीवलोचना ।
कंसभार्या जरासंधं दुहिता मागधं नृपम् ॥ ०४५ ॥

चोदयत्येव राजेन्द्र पतिव्यसनदुःखिता ।
पतिघ्नं मे जहीत्येवं पुनः पुनररिंदम ॥ ०४६ ॥

ततो वयं महाराज तं मन्त्रं पूर्वमन्त्रितम् ।
संस्मरन्तो विमनसो व्यपयाता नराधिप ॥ ०४७ ॥

पृथक्त्वेन द्रुता राजन्सङ्क्षिप्य महतीं श्रियम् ।
प्रपतामो भयात्तस्य सधनज्ञातिबान्धवाः ॥ ०४८ ॥

इति सञ्चिन्त्य सर्वे स्म प्रतीचीं दिशमाश्रिताः ।
कुशस्थलीं पुरीं रम्यां रैवतेनोपशोभिताम् ॥ ०४९ ॥

पुनर्निवेशनं तस्यां कृतवन्तो वयं नृप ।
तथैव दुर्गसंस्कारं देवैरपि दुरासदम् ॥ ०५० ॥

स्त्रियोऽपि यस्यां युध्येयुः किं पुनर्वृष्णिपुङ्गवाः ।
तस्यां वयममित्रघ्न निवसामोऽकुतोभयाः ॥ ०५१ ॥

आलोक्य गिरिमुख्यं तं माधवीतीर्थमेव च ।
माधवाः कुरुशार्दूल परां मुदमवाप्नुवन् ॥ ०५२ ॥

एवं वयं जरासंधादादितः कृतकिल्बिषाः ।
सामर्थ्यवन्तः संबन्धाद्भवन्तं समुपाश्रिताः ॥ ०५३ ॥

त्रियोजनायतं सद्म त्रिस्कन्धं योजनादधि ।
योजनान्ते शतद्वारं विक्रमक्रमतोरणम् ॥ ०५४ ॥

अष्टादशावरैर्नद्धं क्षत्रियैर्युद्धदुर्मदैः ॥ ०५४ ॥

अष्टादश सहस्राणि व्रातानां सन्ति नः कुले ।
आहुकस्य शतं पुत्रा एकैकस्त्रिशतावरः ॥ ०५५ ॥

चारुदेष्णः सह भ्रात्रा चक्रदेवोऽथ सात्यकिः ।
अहं च रौहिणेयश्च साम्बः शौरिसमो युधि ॥ ०५६ ॥

एवमेते रथाः सप्त राजन्नन्यान्निबोध मे ।
कृतवर्मा अनाधृष्टिः समीकः समितिञ्जयः ॥ ०५७ ॥

कह्वः शङ्कुर्निदान्तश्च सप्तैवैते महारथाः ।
पुत्रौ चान्धकभोजस्य वृद्धो राजा च ते दश ॥ ०५८ ॥

लोकसंहनना वीरा वीर्यवन्तो महाबलाः ।
स्मरन्तो मध्यमं देशं वृष्णिमध्ये गतव्यथाः ॥ ०५९ ॥

स त्वं सम्राड्गुणैर्युक्तः सदा भरतसत्तम ।
क्षत्रे सम्राजमात्मानं कर्तुमर्हसि भारत ॥ ०६० ॥

न तु शक्यं जरासंधे जीवमाने महाबले ।
राजसूयस्त्वया प्राप्तुमेषा राजन्मतिर्मम ॥ ०६१ ॥

तेन रुद्धा हि राजानः सर्वे जित्वा गिरिव्रजे ।
कन्दरायां गिरीन्द्रस्य सिंहेनेव महाद्विपाः ॥ ०६२ ॥

सोऽपि राजा जरासंधो यियक्षुर्वसुधाधिपैः ।
आराध्य हि महादेवं निर्जितास्तेन पार्थिवाः ॥ ०६३ ॥

स हि निर्जित्य निर्जित्य पार्थिवान्पृतनागतान् ।
पुरमानीय बद्ध्वा च चकार पुरुषव्रजम् ॥ ०६४ ॥

वयं चैव महाराज जरासंधभयात्तदा ।
मथुरां संपरित्यज्य गता द्वारवतीं पुरीम् ॥ ०६५ ॥

यदि त्वेनं महाराज यज्ञं प्राप्तुमिहेच्छसि ।
यतस्व तेषां मोक्षाय जरासंधवधाय च ॥ ०६६ ॥

समारम्भो हि शक्योऽयं नान्यथा कुरुनन्दन ।
राजसूयस्य कार्त्स्न्येन कर्तुं मतिमतां वर ॥ ०६७ ॥

इत्येषा मे मती राजन्यथा वा मन्यसेऽनघ ।
एवं गते ममाचक्ष्व स्वयं निश्चित्य हेतुभिः ॥ ०६८ ॥

---

# अध्याय ०१४

युधिष्ठिर उवाच ॥

उक्तं त्वया बुद्धिमता यन्नान्यो वक्तुमर्हति ।
संशयानां हि निर्मोक्ता त्वन्नान्यो विद्यते भुवि ॥ ००१ ॥

गृहे गृहे हि राजानः स्वस्य स्वस्य प्रियङ्कराः ।
न च साम्राज्यमाप्तास्ते सम्राड्शब्दो हि कृत्स्नभाक् ॥ ००२ ॥

कथं परानुभावज्ञः स्वं प्रशंसितुमर्हति ।
परेण समवेतस्तु यः प्रशस्तः स पूज्यते ॥ ००३ ॥

विशाला बहुला भूमिर्बहुरत्नसमाचिता ।
दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह ॥ ००४ ॥

शममेव परं मन्ये न तु मोक्षाद्भवेच्छमः ।
आरम्भे पारमेष्ठ्यं तु न प्राप्यमिति मे मतिः ॥ ००५ ॥

एवमेवाभिजानन्ति कुले जाता मनस्विनः ।
कश्चित्कदाचिदेतेषां भवेच्छ्रेष्ठो जनार्दन ॥ ००६ ॥

भीम उवाच ॥

अनारम्भपरो राजा वल्मीक इव सीदति ।
दुर्बलश्चानुपायेन बलिनं योऽधितिष्ठति ॥ ००७ ॥

अतन्द्रितस्तु प्रायेण दुर्बलो बलिनं रिपुम् ।
जयेत्सम्यङ्नयो राजन्नीत्यार्थानात्मनो हितान् ॥ ००८ ॥

कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये ।
मागधं साधयिष्यामो वयं त्रय इवाग्नयः ॥ ००९ ॥

कृष्ण उवाच ॥

आदत्तेऽर्थपरो बालो नानुबन्धमवेक्षते ।
तस्मादरिं न मृष्यन्ति बालमर्थपरायणम् ॥ ०१० ॥

हित्वा करान्यौवनाश्वः पालनाच्च भगीरथः ।
कार्तवीर्यस्तपोयोगाद्बलात्तु भरतो विभुः ॥ ०११ ॥

ऋद्ध्या मरुत्तस्तान्पञ्च सम्राज इति शुश्रुमः ॥ ०११ ॥

निग्राह्यलक्षणं प्राप्तो धर्मार्थनयलक्षणैः ।
बार्हद्रथो जरासंधस्तद्विद्धि भरतर्षभ ॥ ०१२ ॥

न चैनमनुरुध्यन्ते कुलान्येकशतं नृपाः ।
तस्मादेतद्बलादेव साम्राज्यं कुरुतेऽद्य सः ॥ ०१३ ॥

रत्नभाजो हि राजानो जरासंधमुपासते ।

न च तुष्यति तेनापि बाल्यादनयमास्थितः ॥ ०१४ ॥

मूर्धाभिषिक्तं नृपतिं प्रधानपुरुषं बलात् ।
आदत्ते न च नो दृष्टोऽभागः पुरुषतः क्वचित् ॥ ०१५ ॥

एवं सर्वान्वशे चक्रे जरासंधः शतावरान् ।
तं दुर्बलतरो राजा कथं पार्थ उपैष्यति ॥ ०१६ ॥

प्रोक्षितानां प्रमृष्टानां राज्ञां पशुपतेर्गृहे ।
पशूनामिव का प्रीतिर्जीविते भरतर्षभ ॥ ०१७ ॥

क्षत्रियः शस्त्रमरणो यदा भवति सत्कृतः ।
ननु स्म मागधं सर्वे प्रतिबाधेम यद्वयम् ॥ ०१८ ॥

षडशीतिः समानीताः शेषा राजंश्चतुर्दश ।
जरासंधेन राजानस्ततः क्रूरं प्रपत्स्यते ॥ ०१९ ॥

प्राप्नुयात्स यशो दीप्तं तत्र यो विघ्नमाचरेत् ।
जयेद्यश्च जरासंधं स सम्राण्नियतं भवेत् ॥ ०२० ॥

---

# अध्याय ०१५

युधिष्ठिर उवाच ॥

सम्राड्गुणमभीप्सन्वै युष्मान्स्वार्थपरायणः ।
कथं प्रहिणुयां भीमं बलात्केवलसाहसात् ॥ ००१ ॥

भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम् ।

मनश्चक्षुर्विहीनस्य कीदृशं जीवितं भवेत् ॥ ००२ ॥

जरासंधबलं प्राप्य दुष्पारं भीमविक्रमम् ।
श्रमो हि वः पराजय्यात्किमु तत्र विचेष्टितम् ॥ ००३ ॥

अस्मिन्नर्थान्तरे युक्तमनर्थः प्रतिपद्यते ।
यथाहं विमृशाम्येकस्तत्तावच्छ्रूयतां मम ॥ ००४ ॥

संन्यासं रोचये साधु कार्यस्यास्य जनार्दन ।
प्रतिहन्ति मनो मेऽद्य राजसूयो दुरासदः ॥ ००५ ॥

वैशंपायन उवाच ॥

पार्थः प्राप्य धनुःश्रेष्ठमक्षय्यौ च महेषुधी ।
रथं ध्वजं सभां चैव युधिष्ठिरमभाषत ॥ ००६ ॥

धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।
प्राप्तमेतन्मया राजन्दुष्प्रापं यदभीप्सितम् ॥ ००७ ॥

कुले जन्म प्रशंसन्ति वैद्याः साधु सुनिष्ठिताः ।
बलेन सदृशं नास्ति वीर्यं तु मम रोचते ॥ ००८ ॥

कृतवीर्यकुले जातो निर्वीर्यः किं करिष्यति ।
क्षत्रियः सर्वशो राजन्यस्य वृत्तिः पराजये ॥ ००९ ॥

सर्वैरपि गुणैर्हीनो वीर्यवान्हि तरेद्रिपून् ।
सर्वैरपि गुणैर्युक्तो निर्वीर्यः किं करिष्यति ॥ ०१० ॥

द्रव्यभूता गुणाः सर्वे तिष्ठन्ति हि पराक्रमे ।
जयस्य हेतुः सिद्धिर्हि कर्म दैवं च संश्रितम् ॥ ०११ ॥

संयुक्तो हि बलैः कश्चित्प्रमादान्नोपयुज्यते ।
तेन द्वारेण शत्रुभ्यः क्षीयते सबलो रिपुः ॥ ०१२ ॥

दैन्यं यथाबलवति तथा मोहो बलान्विते ।
तावुभौ नाशकौ हेतू राज्ञा त्याज्यौ जयार्थिना ॥ ०१३ ॥

जरासंधविनाशं च राज्ञां च परिमोक्षणम् ।
यदि कुर्याम यज्ञार्थं किं ततः परमं भवेत् ॥ ०१४ ॥

अनारम्भे तु नियतो भवेदगुणनिश्चयः ।
गुणान्निःसंशयाद्राजन्नैर्गुण्यं मन्यसे कथम् ॥ ०१५ ॥

काषायं सुलभं पश्चान्मुनीनां शममिच्छताम् ।
साम्राज्यं तु तवेच्छन्तो वयं योत्स्यामहे परैः ॥ ०१६ ॥

---

# अध्याय ०१६

वासुदेव उवाच ॥

जातस्य भारते वंशे तथा कुन्त्याः सुतस्य च ।
या वै युक्ता मतिः सेयमर्जुनेन प्रदर्शिता ॥ ००१ ॥

न मृत्योः समयं विद्म रात्रौ वा यदि वा दिवा ।
न चापि कञ्चिदमरमयुद्धेनापि शुश्रुमः ॥ ००२ ॥

एतावदेव पुरुषैः कार्यं हृदयतोषणम् ।
नयेन विधिदृष्टेन यदुपक्रमते परान् ॥ ००३ ॥

सुनयस्यानपायस्य संयुगे परमः क्रमः ।
संशयो जायते साम्ये साम्यं च न भवेद्द्वयोः ॥ ००४ ॥

ते वयं नयमास्थाय शत्रुदेहसमीपगाः ।
कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः ॥ ००५ ॥

पररन्ध्रे पराक्रान्ताः स्वरन्ध्रावरणे स्थिताः ॥ ००५ ॥

व्यूढानीकैरनुबलैर्नोपेयाद्बलवत्तरम् ।
इति बुद्धिमतां नीतिस्तन्ममापीह रोचते ॥ ००६ ॥

अनवद्या ह्यसंबुद्धाः प्रविष्टाः शत्रुसद्म तत् ।
शत्रुदेहमुपाक्रम्य तं कामं प्राप्नुयामहे ॥ ००७ ॥

एको ह्येव श्रियं नित्यं बिभर्ति पुरुषर्षभ ।
अन्तरात्मेव भूतानां तत्क्षये वै बलक्षयः ॥ ००८ ॥

अथ चेत्तं निहत्याजौ शेषेणाभिसमागताः ।
प्राप्नुयाम ततः स्वर्गं ज्ञातित्राणपरायणाः ॥ ००९ ॥

युधिष्ठिर उवाच ॥

कृष्ण कोऽयं जरासंधः किंवीर्यः किंपराक्रमः ।
यस्त्वां स्पृष्ट्वाग्निसदृशं न दग्धः शलभो यथा ॥ ०१० ॥

कृष्ण उवाच ॥

शृणु राजञ्जरासंधो यद्वीर्यो यत्पराक्रमः ।
यथा चोपेक्षितोऽस्माभिर्बहुशः कृतविप्रियः ॥ ०११ ॥

अक्षौहिणीनां तिसृणामासीत्समरदर्पितः ।

राजा बृहद्रथो नाम मगधाधिपतिः पतिः ॥ ०१२ ॥

रूपवान्वीर्यसंपन्नः श्रीमानतुलविक्रमः ।
नित्यं दीक्षाकृशतनुः शतक्रतुरिवापरः ॥ ०१३ ॥

तेजसा सूर्यसदृशः क्षमया पृथिवीसमः ।
यमान्तकसमः कोपे श्रिया वैश्रवणोपमः ॥ ०१४ ॥

तस्याभिजनसंयुक्तैर्गुणैर्भरतसत्तम ।
व्याप्तेयं पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥ ०१५ ॥

स काशिराजस्य सुते यमजे भरतर्षभ ।
उपयेमे महावीर्यो रूपद्रविणसंमते ॥ ०१६ ॥

तयोश्चकार समयं मिथः स पुरुषर्षभः ।
नातिवर्तिष्य इत्येवं पत्नीभ्यां संनिधौ तदा ॥ ०१७ ॥

स ताभ्यां शुशुभे राजा पत्नीभ्यां मनुजाधिप ।
प्रियाभ्यामनुरूपाभ्यां करेणुभ्यामिव द्विपः ॥ ०१८ ॥

तयोर्मध्यगतश्चापि रराज वसुधाधिपः ।
गङ्गायमुनयोर्मध्ये मूर्तिमानिव सागरः ॥ ०१९ ॥

विषयेषु निमग्नस्य तस्य यौवनमत्यगात् ।
न च वंशकरः पुत्रस्तस्याजायत कश्चन ॥ ०२० ॥

मङ्गलैर्बहुभिर्होमैः पुत्रकामाभिरिष्टिभिः ।
नाससाद नृपश्रेष्ठः पुत्रं कुलविवर्धनम् ॥ ०२१ ॥

अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः ।
शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकम् ॥ ०२२ ॥

यदृच्छयागतं तं तु वृक्षमूलमुपाश्रितम् ।
पत्नीभ्यां सहितो राजा सर्वरत्नैरतोषयत् ॥ ०२३ ॥

तमब्रवीत्सत्यधृतिः सत्यवागृषिसत्तमः ।
परितुष्टोऽस्मि ते राजन्वरं वरय सुव्रत ॥ ०२४ ॥

ततः सभार्यः प्रणतस्तमुवाच बृहद्रथः ।
पुत्रदर्शननैराश्याद्बाष्पगद्गदया गिरा ॥ ०२५ ॥

बृहद्रथ उवाच ॥

भगवन्राज्यमुत्सृज्य प्रस्थितस्य तपोवनम् ।
किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे ॥ ०२६ ॥

कृष्ण उवाच ॥

एतच्छ्रुत्वा मुनिर्ध्यानमगमत्क्षुभितेन्द्रियः ।
तस्यैव चाम्रवृक्षस्य छायायां समुपाविशत् ॥ ०२७ ॥

तस्योपविष्टस्य मुनेरुत्सङ्गे निपपात ह ।
अवातमशुकादष्टमेकमाम्रफलं किल ॥ ०२८ ॥

तत्प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च ।
राज्ञे ददावप्रतिमं पुत्रसंप्राप्तिकारकम् ॥ ०२९ ॥

उवाच च महाप्राज्ञस्तं राजानं महामुनिः ।
गच्छ राजन्कृतार्थोऽसि निवर्त मनुजाधिप ॥ ०३० ॥

यथासमयमाज्ञाय तदा स नृपसत्तमः ।
द्वाभ्यामेकं फलं प्रादात्पत्नीभ्यां भरतर्षभ ॥ ०३१ ॥

ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे ।
भावित्वादपि चार्थस्य सत्यवाक्यात्तथा मुनेः ॥ ०३२ ॥

तयोः समभवद्गर्भः फलप्राशनसंभवः ।
ते च दृष्ट्वा नरपतिः परां मुदमवाप ह ॥ ०३३ ॥

अथ काले महाप्राज्ञ यथासमयमागते ।
प्रजायेतामुभे राजञ्शरीरशकले तदा ॥ ०३४ ॥

एकाक्षिबाहुचरणे अर्धोदरमुखस्फिजे ।
दृष्ट्वा शरीरशकले प्रवेपाते उभे भृशम् ॥ ०३५ ॥

उद्विग्ने सह संमन्त्र्य ते भगिन्यौ तदाबले ।
सजीवे प्राणिशकले तत्यजाते सुदुःखिते ॥ ०३६ ॥

तयोर्धात्र्यौ सुसंवीते कृत्वा ते गर्भसंप्लवे ।
निर्गम्यान्तःपुरद्वारात्समुत्सृज्याशु जग्मतुः ॥ ०३७ ॥

ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी ।
जग्राह मनुजव्याघ्र मांसशोणितभोजना ॥ ०३८ ॥

कर्तुकामा सुखवहे शकले सा तु राक्षसी ।
संघट्टयामास तदा विधानबलचोदिता ॥ ०३९ ॥

ते समानीतमात्रे तु शकले पुरुषर्षभ ।
एकमूर्तिकृते वीरः कुमारः समपद्यत ॥ ०४० ॥

ततः सा राक्षसी राजन्विस्मयोत्फुल्ललोचना ।
न शशाक समुद्वोढुं वज्रसारमयं शिशुम् ॥ ०४१ ॥

बालस्ताम्रतलं मुष्टिं कृत्वा चास्ये निधाय सः ।
प्राक्रोशदतिसंरम्भात्सतोय इव तोयदः ॥ ०४२ ॥

तेन शब्देन संभ्रान्तः सहसान्तःपुरे जनः ।
निर्जगाम नरव्याघ्र राज्ञा सह परंतप ॥ ०४३ ॥

ते चाबले परिग्लाने पयःपूर्णपयोधरे ।
निराशे पुत्रलाभाय सहसैवाभ्यगच्छताम् ॥ ०४४ ॥

अथ दृष्ट्वा तथाभूते राजानं चेष्टसंततिम् ।
तं च बालं सुबलिनं चिन्तयामास राक्षसी ॥ ०४५ ॥

नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः ।
बालं पुत्रमुपादातुं मेघलेखेव भास्करम् ॥ ०४६ ॥

सा कृत्वा मानुषं रूपमुवाच मनुजाधिपम् ।
बृहद्रथ सुतस्तेऽयं मद्दत्तः प्रतिगृह्यताम् ॥ ०४७ ॥

तव पत्नीद्वये जातो द्विजातिवरशासनात् ।
धात्रीजनपरित्यक्तो मयायं परिरक्षितः ॥ ०४८ ॥

ततस्ते भरतश्रेष्ठ काशिराजसुते शुभे ।
तं बालमभिपत्याशु प्रस्नवैरभिषिञ्चताम् ॥ ०४९ ॥

ततः स राजा संहृष्टः सर्वं तदुपलभ्य च ।
अपृच्छन्नवहेमाभां राक्षसीं तामराक्षसीम् ॥ ०५० ॥

का त्वं कमलगर्भाभे मम पुत्रप्रदायिनी ।
कामया ब्रूहि कल्याणि देवता प्रतिभासि मे ॥ ०५१ ॥

# अध्याय ०१७

राक्षस्युवाच ॥

जरा नामास्मि भद्रं ते राक्षसी कामरूपिणी ।
तव वेश्मनि राजेन्द्र पूजिता न्यवसं सुखम् ॥ ००१ ॥

साहं प्रत्युपकारार्थं चिन्तयन्त्यनिशं नृप ।
तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक ॥ ००२ ॥

संश्लेषिते मया दैवात्कुमारः समपद्यत ।
तव भाग्यैर्महाराज हेतुमात्रमहं त्विह ॥ ००३ ॥

कृष्ण उवाच ॥

एवमुक्त्वा तु सा राजंस्तत्रैवान्तरधीयत ।
स गृह्य च कुमारं तं प्राविशत्स्वगृहं नृपः ॥ ००४ ॥

तस्य बालस्य यत्कृत्यं तच्चकार नृपस्तदा ।
आज्ञापयच्च राक्षस्या मागधेषु महोत्सवम् ॥ ००५ ॥

तस्य नामाकरोत्तत्र प्रजापतिसमः पिता ।
जरया संधितो यस्माज्जरासंधस्ततोऽभवत् ॥ ००६ ॥

सोऽवर्धत महातेजा मगधाधिपतेः सुतः ।
प्रमाणबलसंपन्नो हुताहुतिरिवानलः ॥ ००७ ॥

कस्यचित्त्वथ कालस्य पुनरेव महातपाः ।
मगधानुपचक्राम भगवांश्चण्डकौशिकः ॥ ००८ ॥

तस्यागमनसंहृष्टः सामात्यः सपुरःसरः ।
सभार्यः सह पुत्रेण निर्जगाम बृहद्रथः ॥ ००९ ॥

पाद्यार्घ्याचमनीयैस्तमर्चयामास भारत ।
स नृपो राज्यसहितं पुत्रं चास्मै न्यवेदयत् ॥ ०१० ॥

प्रतिगृह्य तु तां पूजां पार्थिवाद्भगवानृषिः ।
उवाच मागधं राजन्प्रहृष्टेनान्तरात्मना ॥ ०११ ॥

सर्वमेतन्मया राजन्विज्ञातं ज्ञानचक्षुषा ।
पुत्रस्तु शृणु राजेन्द्र यादृशोऽयं भविष्यति ॥ ०१२ ॥

अस्य वीर्यवतो वीर्यं नानुयास्यन्ति पार्थिवाः ।
देवैरपि विसृष्टानि शस्त्राण्यस्य महीपते ॥ ०१३ ॥

न रुजं जनयिष्यन्ति गिरेरिव नदीरयाः ॥ ०१३ ॥

सर्वमूर्धाभिषिक्तानामेष मूर्ध्नि ज्वलिष्यति ।
सर्वेषां निष्प्रभकरो ज्योतिषामिव भास्करः ॥ ०१४ ॥

एनमासाद्य राजानः समृद्धबलवाहनाः ।
विनाशमुपयास्यन्ति शलभा इव पावकम् ॥ ०१५ ॥

एष श्रियं समुदितां सर्वराज्ञां ग्रहीष्यति ।
वर्षास्विवोद्धतजला नदीर्नदनदीपतिः ॥ ०१६ ॥

एष धारयिता सम्यक्चातुर्वर्ण्यं महाबलः ।
शुभाशुभमिव स्फीता सर्वसस्यधरा धरा ॥ ०१७ ॥

अस्याज्ञावशगाः सर्वे भविष्यन्ति नराधिपाः ।

सर्वभूतात्मभूतस्य वायोरिव शरीरिणः ॥ ०१८ ॥

एष रुद्रं महादेवं त्रिपुरान्तकरं हरम् ।
सर्वलोकेष्वतिबलः स्वयं द्रक्ष्यति मागधः ॥ ०१९ ॥

एवं ब्रुवन्नेव मुनिः स्वकार्यार्थं विचिन्तयन् ।
विसर्जयामास नृपं बृहद्रथमथारिहन् ॥ ०२० ॥

प्रविश्य नगरं चैव ज्ञातिसंबन्धिभिर्वृतः ।
अभिषिच्य जरासंधं मगधाधिपतिस्तदा ॥ ०२१ ॥

बृहद्रथो नरपतिः परां निर्वृतिमाययौ ॥ ०२१ ॥

अभिषिक्ते जरासंधे तदा राजा बृहद्रथः ।
पत्नीद्वयेनानुगतस्तपोवनरतोऽभवत् ॥ ०२२ ॥

तपोवनस्थे पितरि मातृभ्यां सह भारत ।
जरासंधः स्ववीर्येण पार्थिवानकरोद्वशे ॥ ०२३ ॥

अथ दीर्घस्य कालस्य तपोवनगतो नृपः ।
सभार्यः स्वर्गमगमत्तपस्तप्त्वा बृहद्रथः ॥ ०२४ ॥

तस्यास्तां हंसडिभकावशस्त्रनिधनावुभौ ।
मन्त्रे मतिमतां श्रेष्ठौ युद्धशास्त्रविशारदौ ॥ ०२५ ॥

यौ तौ मया ते कथितौ पूर्वमेव महाबलौ ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ॥ ०२६ ॥

एवमेष तदा वीर बलिभिः कुकुरान्धकैः ।
वृष्णिभिश्च महाराज नीतिहेतोरुपेक्षितः ॥ ०२७ ॥

# जरासंधपर्व

## अध्याय ०१८

वासुदेव उवाच ॥

पतितौ हंसडिभकौ कंसामात्यौ निपातितौ ।
जरासंधस्य निधने कालोऽयं समुपागतः ॥ ००१ ॥

न स शक्यो रणे जेतुं सर्वैरपि सुरासुरैः ।
प्राणयुद्धेन जेतव्यः स इत्युपलभामहे ॥ ००२ ॥

मयि नीतिर्बलं भीमे रक्षिता चावयोर्जुनः ।
साधयिष्याम तं राजन्वयं त्रय इवाग्नयः ॥ ००३ ॥

त्रिभिरासादितोऽस्माभिर्विजने स नराधिपः ।
न संदेहो यथा युद्धमेकेनाभ्युपयास्यति ॥ ००४ ॥

अवमानाच्च लोकस्य व्यायतत्वाच्च धर्षितः ।
भीमसेनेन युद्धाय ध्रुवमभ्युपयास्यति ॥ ००५ ॥

अलं तस्य महाबाहुर्भीमसेनो महाबलः ।
लोकस्य समुदीर्णस्य निधनायान्तको यथा ॥ ००६ ॥

यदि ते हृदयं वेत्ति यदि ते प्रत्ययो मयि ।
भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे ॥ ००७ ॥

वैशंपायन उवाच ॥

एवमुक्तो भगवता प्रत्युवाच युधिष्ठिरः ।
भीमपार्थौ समालोक्य संप्रहृष्टमुखौ स्थितौ ॥ ००८ ॥

अच्युताच्युत मा मैवं व्याहरामित्रकर्षण ।
पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयम् ॥ ००९ ॥

यथा वदसि गोविन्द सर्वं तदुपपद्यते ।
न हि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी ॥ ०१० ॥

निहतश्च जरासंधो मोक्षिताश्च महीक्षितः ।
राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः ॥ ०११ ॥

क्षिप्रकारिन्यथा त्वेतत्कार्यं समुपपद्यते ।
मम कार्यं जगत्कार्यं तथा कुरु नरोत्तम ॥ ०१२ ॥

त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे ।
धर्मकामार्थरहितो रोगार्त इव दुर्गतः ॥ ०१३ ॥

न शौरिणा विना पार्थो न शौरिः पाण्डवं विना ।
नाजेयोऽस्त्यनयोर्लोके कृष्णयोरिति मे मतिः ॥ ०१४ ॥

अयं च बलिनां श्रेष्ठः श्रीमानपि वृकोदरः ।
युवाभ्यां सहितो वीरः किं न कुर्यान्महायशाः ॥ ०१५ ॥

सुप्रणीतो बलौघो हि कुरुते कार्यमुत्तमम् ।
अन्धं जडं बलं प्राहुः प्रणेतव्यं विचक्षणैः ॥ ०१६ ॥

यतो हि निम्नं भवति नयन्तीह ततो जलम् ।
यतश्छिद्रं ततश्चापि नयन्ते धीधना बलम् ॥ ०१७ ॥

तस्मान्नयविधानज्ञं पुरुषं लोकविश्रुतम् ।
वयमाश्रित्य गोविन्दं यतामः कार्यसिद्धये ॥ ०१८ ॥

एवं प्रज्ञानयबलं क्रियोपायसमन्वितम् ।
पुरस्कुर्वीत कार्येषु कृष्ण कार्यार्थसिद्धये ॥ ०१९ ॥

एवमेव यदुश्रेष्ठं पार्थः कार्यार्थसिद्धये ।
अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयम् ॥ ०२० ॥

नयो जयो बलं चैव विक्रमे सिद्धिमेष्यति ॥ ०२० ॥

एवमुक्तास्ततः सर्वे भ्रातरो विपुलौजसः ।
वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधं प्रति ॥ ०२१ ॥

वर्चस्विनां ब्राह्मणानां स्नातकानां परिच्छदान् ।
आच्छाद्य सुहृदां वाक्यैर्मनोज्ञैरभिनन्दिताः ॥ ०२२ ॥

अमर्षादभितप्तानां ज्ञात्यर्थं मुख्यवाससाम् ।
रविसोमाग्निवपुषां भीममासीत्तदा वपुः ॥ ०२३ ॥

हतं मेने जरासंधं दृष्ट्वा भीमपुरोगमौ ।
एककार्यसमुद्युक्तौ कृष्णौ युद्धेऽपराजितौ ॥ ०२४ ॥

ईशौ हि तौ महात्मानौ सर्वकार्यप्रवर्तने ।
धर्मार्थकामकार्याणां कार्याणामिव निग्रहे ॥ ०२५ ॥

कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलम् ।
रम्यं पद्मसरो गत्वा कालकूटमतीत्य च ॥ ०२६ ॥

गण्डकीयां तथा शोणं सदानीरां तथैव च ।
एकपर्वतके नद्यः क्रमेणैत्य व्रजन्ति ते ॥ ०२७ ॥

संतीर्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोसलान् ।
अतीत्य जग्मुर्मिथिलां मालां चर्मण्वतीं नदीम् ॥ ०२८ ॥

उत्तीर्य गङ्गां शोणं च सर्वे ते प्राङ्मुखास्त्रयः ।
कुरवोरश्छदं जग्मुर्मागधं क्षेत्रमच्युताः ॥ ०२९ ॥

ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमम् ।
गोरथं गिरिमासाद्य ददृशुर्मागधं पुरम् ॥ ०३० ॥

---

# अध्याय ०१९

वासुदेव उवाच ॥

एष पार्थ महान्स्वादुः पशुमान्नित्यमम्बुमान् ।
निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः ॥ ००१ ॥

वैहारो विपुलः शैलो वराहो वृषभस्तथा ।
तथैवर्षिगिरिस्तात शुभाश्चैत्यकपञ्चमाः ॥ ००२ ॥

एते पञ्च महाशृङ्गाः पर्वताः शीतलद्रुमाः ।
रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम् ॥ ००३ ॥

पुष्पवेष्टितशाखाग्रैर्गन्धवद्भिर्मनोरमैः ।
निगूढा इव लोध्राणां वनैः कामिजनप्रियैः ॥ ००४ ॥

शूद्रायां गौतमो यत्र महात्मा संशितव्रतः ।

औशीनर्यामजनयत्काक्षीवादीन्सुतानृषिः ॥ ००५ ॥

गौतमः क्षयणादस्मादथासौ तत्र वेश्मनि ।
भजते मागधं वंशं स नृपाणामनुग्रहात् ॥ ००६ ॥

अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः ।
गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्जुन ॥ ००७ ॥

वनराजीस्तु पश्येमाः प्रियालानां मनोरमाः ।
लोध्राणां च शुभाः पार्थ गौतमौकःसमीपजाः ॥ ००८ ॥

अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ ।
स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः ॥ ००९ ॥

अपरिहार्या मेघानां मागधेयं मणेः कृते ।
कौशिको मणिमांश्चैव ववृधाते ह्यनुग्रहम् ॥ ०१० ॥

अर्थसिद्धिं त्वनपगां जरासंधोऽभिमन्यते ।
वयमासादने तस्य दर्पमद्य निहन्म हि ॥ ०११ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा ततः सर्वे भ्रातरो विपुलौजसः ।
वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधं पुरम् ॥ ०१२ ॥

तुष्टपुष्टजनोपेतं चातुर्वर्ण्यजनाकुलम् ।
स्फीतोत्सवमनाधृष्यमासेदुश्च गिरिव्रजम् ॥ ०१३ ॥

तेऽथ द्वारमनासाद्य पुरस्य गिरिमुच्छ्रितम् ।
बार्हद्रथैः पूज्यमानं तथा नगरवासिभिः ॥ ०१४ ॥

यत्र माषादमृषभमाससाद बृहद्रथः ।
तं हत्वा माषनालाश्च तिस्रो भेरीरकारयत् ॥ ०१५ ॥

आनह्य चर्मणा तेन स्थापयामास स्वे पुरे ।
यत्र ताः प्राणदन्भेर्यो दिव्यपुष्पावचूर्णिताः ॥ ०१६ ॥

मागधानां सुरुचिरं चैत्यकान्तं समाद्रवन् ।
शिरसीव जिघांसन्तो जरासंधजिघांसवः ॥ ०१७ ॥

स्थिरं सुविपुलं शृङ्गं सुमहान्तं पुरातनम् ।
अर्चितं माल्यदामैश्च सततं सुप्रतिष्ठितम् ॥ ०१८ ॥

विपुलैर्बाहुभिर्वीरास्तेऽभिहत्याभ्यपातयन् ।
ततस्ते मागधं दृष्ट्वा पुरं प्रविविशुस्तदा ॥ ०१९ ॥

एतस्मिन्नेव काले तु जरासंधं समर्चयन् ।
पर्यग्निं कुर्वंश्च नृपं द्विरदस्थं पुरोहिताः ॥ ०२० ॥

स्नातकव्रतिनस्ते तु बाहुशस्त्रा निरायुधाः ।
युयुत्सवः प्रविविशुर्जरासंधेन भारत ॥ ०२१ ॥

भक्ष्यमाल्यापणानां च ददृशुः श्रियमुत्तमाम् ।
स्फीतां सर्वगुणोपेतां सर्वकामसमृद्धिनीम् ॥ ०२२ ॥

तां तु दृष्ट्वा समृद्धिं ते वीथ्यां तस्यां नरोत्तमाः ।
राजमार्गेण गच्छन्तः कृष्णभीमधनञ्जयाः ॥ ०२३ ॥

बलाद्गृहीत्वा माल्यानि मालाकारान्महाबलाः ।
विरागवसनाः सर्वे स्रग्विणो मृष्टकुण्डलाः ॥ ०२४ ॥

निवेशनमथाजग्मुर्जरासंधस्य धीमतः ।

गोवासमिव वीक्षन्तः सिंहा हैमवता यथा ॥ ०२५ ॥

शैलस्तम्भनिभास्तेषां चन्दनागुरुभूषिताः ।
अशोभन्त महाराज बाहवो बाहुशालिनाम् ॥ ०२६ ॥

तान्दृष्ट्वा द्विरदप्रख्याञ्शालस्कन्धानिवोद्गतान् ।
व्यूढोरस्कान्मागधानां विस्मयः समजायत ॥ ०२७ ॥

ते त्वतीत्य जनाकीर्णास्तिस्रः कक्ष्या नरर्षभाः ।
अहङ्कारेण राजानमुपतस्थुर्महाबलाः ॥ ०२८ ॥

तान्पाद्यमधुपर्कार्हान्मानार्हान्सत्कृतिं गतान् ।
प्रत्युत्थाय जरासंध उपतस्थे यथाविधि ॥ ०२९ ॥

उवाच चैतान्राजासौ स्वागतं वोऽस्त्विति प्रभुः ।
तस्य ह्येतद्व्रतं राजन्बभूव भुवि विश्रुतम् ॥ ०३० ॥

स्नातकान्ब्राह्मणान्प्राप्ताञ्श्रुत्वा स समितिञ्जयः ।
अप्यर्धरात्रे नृपतिः प्रत्युद्गच्छति भारत ॥ ०३१ ॥

तांस्त्वपूर्वेण वेषेण दृष्ट्वा नृपतिसत्तमः ।
उपतस्थे जरासंधो विस्मितश्चाभवत्तदा ॥ ०३२ ॥

ते तु दृष्ट्वैव राजानं जरासंधं नरर्षभाः ।
इदमूचुरमित्रघ्नाः सर्वे भरतसत्तम ॥ ०३३ ॥

स्वस्त्यस्तु कुशलं राजन्निति सर्वे व्यवस्थिताः ।
तं नृपं नृपशार्दूल विप्रैक्षन्त परस्परम् ॥ ०३४ ॥

तानब्रवीज्जरासंधस्तदा यादवपाण्डवान् ।
आस्यतामिति राजेन्द्र ब्राह्मणच्छद्मसंवृतान् ॥ ०३५ ॥

अथोपविविशुः सर्वे त्रयस्ते पुरुषर्षभाः ।
संप्रदीप्तास्त्रयो लक्ष्म्या महाध्वर इवाग्नयः ॥ ०३६ ॥

तानुवाच जरासंधः सत्यसंधो नराधिपः ।
विगर्हमाणः कौरव्य वेषग्रहणकारणात् ॥ ०३७ ॥

न स्नातकव्रता विप्रा बहिर्माल्यानुलेपनाः ।
भवन्तीति नृलोकेऽस्मिन्विदितं मम सर्वशः ॥ ०३८ ॥

ते यूयं पुष्पवन्तश्च भुजैर्ज्याघातलक्षणैः ।
बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ ॥ ०३९ ॥

एवं विरागवसना बहिर्माल्यानुलेपनाः ।
सत्यं वदत के यूयं सत्यं राजसु शोभते ॥ ०४० ॥

चैत्यकं च गिरेः शृङ्गं भित्त्वा किमिव सद्म नः ।
अद्वारेण प्रविष्टाः स्थ निर्भया राजकिल्बिषात् ॥ ०४१ ॥

कर्म चैतद्विलिङ्गस्य किं वाद्य प्रसमीक्षितम् ।
वदध्वं वाचि वीर्यं च ब्राह्मणस्य विशेषतः ॥ ०४२ ॥

एवं च मामुपस्थाय कस्माच्च विधिनार्हणाम् ।
प्रणीतां नो न गृह्णीत कार्यं किं चास्मदागमे ॥ ०४३ ॥

एवमुक्तस्ततः कृष्णः प्रत्युवाच महामनाः ।
स्निग्धगम्भीरया वाचा वाक्यं वाक्यविशारदः ॥ ०४४ ॥

स्नातकव्रतिनो राजन्ब्राह्मणाः क्षत्रिया विशः ।
विशेषनियमाश्चैषामविशेषाश्च सन्त्युत ॥ ०४५ ॥

विशेषवांश्च सततं क्षत्रियः श्रियमर्छति ।
पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवन्तस्ततो वयम् ॥ ०४६ ॥

क्षत्रियो बाहुवीर्यस्तु न तथा वाक्यवीर्यवान् ।
अप्रगल्भं वचस्तस्य तस्माद्वार्हद्रथे स्मृतम् ॥ ०४७ ॥

स्ववीर्यं क्षत्रियाणां च बाह्वोर्धाता न्यवेशयत् ।
तद्दिदृक्षसि चेद्राजन्द्रष्टास्यद्य न संशयः ॥ ०४८ ॥

अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहम् ।
प्रविशन्ति सदा सन्तो द्वारं नो वर्जितं ततः ॥ ०४९ ॥

कार्यवन्तो गृहानेत्य शत्रुतो नार्हणां वयम् ।
प्रतिगृह्णीम तद्विद्धि एतन्नः शाश्वतं व्रतम् ॥ ०५० ॥

---

# अध्याय ०२०

जरासंध उवाच ॥

न स्मरेयं कदा वैरं कृतं युष्माभिरित्युत ।
चिन्तयंश्च न पश्यामि भवतां प्रति वैकृतम् ॥ ००१ ॥

वैकृते चासति कथं मन्यध्वं मामनागसम् ।
अरिं विब्रूत तद्विप्राः सतां समय एष हि ॥ ००२ ॥

अथ धर्मोपघाताद्धि मनः समुपतप्यते ।
योऽनागसि प्रसृजति क्षत्रियोऽपि न संशयः ॥ ००३ ॥

अतोऽन्यथाचर.ण्ल्लोके धर्मज्ञः सन्महाव्रतः ।
वृजिनां गतिमाप्नोति श्रेयसोऽप्युपहन्ति च ॥ ००४ ॥

त्रैलोक्ये क्षत्रधर्माद्धि श्रेयांसं साधुचारिणाम् ।
अनागसं प्रजानानाः प्रमादादिव जल्पथ ॥ ००५ ॥

वासुदेव उवाच ॥

कुलकार्यं महाराज कश्चिदेकः कुलोद्वहः ।
वहते तन्नियोगाद्वै वयमभ्युत्थितास्त्रयः ॥ ००६ ॥

त्वया चोपहृता राजन्क्षत्रिया लोकवासिनः ।
तदागः क्रूरमुत्पाद्य मन्यसे किं त्वनागसम् ॥ ००७ ॥

राजा राज्ञः कथं साधून्हिंस्यान्नृपतिसत्तम ।
तद्राज्ञः संनिगृह्य त्वं रुद्रायोपजिहीर्षसि ॥ ००८ ॥

अस्मांस्तदेनो गच्छेत त्वया बार्हद्रथे कृतम् ।
वयं हि शक्ता धर्मस्य रक्षणे धर्मचारिणः ॥ ००९ ॥

मनुष्याणां समालम्भो न च दृष्टः कदाचन ।
स कथं मानुषैर्देवं यष्टुमिच्छसि शङ्करम् ॥ ०१० ॥

सवर्णो हि सवर्णानां पशुसञ्ज्ञां करिष्यति ।
कोऽन्य एवं यथा हि त्वं जरासंध वृथामतिः ॥ ०११ ॥

ते त्वां ज्ञातिक्षयकरं वयमार्तानुसारिणः ।
ज्ञातिवृद्धिनिमित्तार्थं विनियन्तुमिहागताः ॥ ०१२ ॥

नास्ति लोके पुमानन्यः क्षत्रियेष्विति चैव यत् ।
मन्यसे स च ते राजन्सुमहान्बुद्धिविप्लवः ॥ ०१३ ॥

को हि जानन्नभिजनमात्मनः क्षत्रियो नृप ।
नाविशेत्स्वर्गमतुलं रणानन्तरमव्ययम् ॥ ०१४ ॥

स्वर्गं ह्येव समास्थाय रणयज्ञेषु दीक्षिताः ।
यजन्ते क्षत्रिया लोकांस्तद्विद्धि मगधाधिप ॥ ०१५ ॥

स्वर्गयोनिर्जयो राजन्स्वर्गयोनिर्महद्यशः ।
स्वर्गयोनिस्तपो युद्धे मार्गः सोऽव्यभिचारवान् ॥ ०१६ ॥

एष ह्यैन्द्रो वैजयन्तो गुणो नित्यं समाहितः ।
येनासुरान्पराजित्य जगत्पाति शतक्रतुः ॥ ०१७ ॥

स्वर्गमास्थाय कस्य स्याद्विग्रहित्वं यथा तव ।
मागधैर्विपुलैः सैन्यैर्बाहुल्यबलदर्पितैः ॥ ०१८ ॥

मावमंस्थाः परान्राजन्नास्ति वीर्यं नरे नरे ।
समं तेजस्त्वया चैव केवलं मनुजेश्वर ॥ ०१९ ॥

यावदेव न संबुद्धं तावदेव भवेत्तव ।
विषह्यमेतदस्माकमतो राजन्ब्रवीमि ते ॥ ०२० ॥

जहि त्वं सदृशेष्वेव मानं दर्पं च मागध ।
मा गमः ससुतामात्यः सबलश्च यमक्षयम् ॥ ०२१ ॥

दम्भोद्भवः कार्तवीर्य उत्तरश्च बृहद्रथः ।
श्रेयसो ह्यवमन्येह विनेशुः सबला नृपाः ॥ ०२२ ॥

मुमुक्षमाणास्त्वत्तश्च न वयं ब्राह्मणब्रुवाः ।
शौरिरस्मि हृषीकेशो नृवीरौ पाण्डवाविमौ ॥ ०२३ ॥

त्वामाह्वयामहे राजन्स्थिरो युध्यस्व मागध ।
मुञ्च वा नृपतीन्सर्वान्मा गमस्त्वं यमक्षयम् ॥ ०२४ ॥

जरासंध उवाच ॥

नाजितान्वै नरपतीनहमादद्मि कांश्चन ।
जितः कः पर्यवस्थाता कोऽत्र यो न मया जितः ॥ ०२५ ॥

क्षत्रियस्यैतदेवाहुर्धर्म्यं कृष्णोपजीवनम् ।
विक्रम्य वशमानीय कामतो यत्समाचरेत् ॥ ०२६ ॥

देवतार्थमुपाकृत्य राज्ञः कृष्ण कथं भयात् ।
अहमद्य विमुञ्चेयं क्षात्रं व्रतमनुस्मरन् ॥ ०२७ ॥

सैन्यं सैन्येन व्यूढेन एक एकेन वा पुनः ।
द्वाभ्यां त्रिभिर्वा योत्स्येऽहं युगपत्पृथगेव वा ॥ ०२८ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा जरासंधः सहदेवाभिषेचनम् ।
आज्ञापयत्तदा राजा युयुत्सुर्भीमकर्मभिः ॥ ०२९ ॥

स तु सेनापती राजा सस्मार भरतर्षभ ।
कौशिकं चित्रसेनं च तस्मिन्युद्ध उपस्थिते ॥ ०३० ॥

ययोस्ते नामनी लोके हंसेति डिभकेति च ।
पूर्वं सङ्कथिते पुम्भिर्नृलोके लोकसत्कृते ॥ ०३१ ॥

तं तु राजन्विभुः शौरी राजानं बलिनां वरम् ।
स्मृत्वा पुरुषशार्दूल शार्दूलसमविक्रमम् ॥ ०३२ ॥

सत्यसंधो जरासंधं भुवि भीमपराक्रमम् ।
भागमन्यस्य निर्दिष्टं वध्यं भूमिभृदच्युतः ॥ ०३३ ॥

नात्मनात्मवतां मुख्य इयेष मधुसूदनः ।
ब्रह्मणोऽऽज्ञां पुरस्कृत्य हन्तुं हलधरानुजः ॥ ०३४ ॥

---

# अध्याय ०२१

वैशंपायन उवाच ॥

ततस्तं निश्चितात्मानं युद्धाय यदुनन्दनः ।
उवाच वाग्मी राजानं जरासंधमधोक्षजः ॥ ००१ ॥

त्रयाणां केन ते राजन्योद्धुं वितरते मनः ।
अस्मदन्यतमेनेह सज्जीभवतु को युधि ॥ ००२ ॥

एवमुक्तः स कृष्णेन युद्धं वव्रे महाद्युतिः ।
जरासंधस्ततो राजन्भीमसेनेन मागधः ॥ ००३ ॥

धारयन्नगदान्मुख्यान्निर्वृतीर्वेदनानि च ।
उपतस्थे जरासंधं युयुत्सुं वै पुरोहितः ॥ ००४ ॥

कृतस्वस्त्ययनो विद्वान्ब्राह्मणेन यशस्विना ।
समनह्यज्जरासंधः क्षत्रधर्ममनुव्रतः ॥ ००५ ॥

अवमुच्य किरीटं स केशान्समनुमृज्य च ।
उदतिष्ठज्जरासंधो वेलातिग इवार्णवः ॥ ००६ ॥

उवाच मतिमान्राजा भीमं भीमपराक्रमम् ।
भीम योत्स्ये त्वया सार्धं श्रेयसा निर्जितं वरम् ॥ ००७ ॥

एवमुक्त्वा जरासंधो भीमसेनमरिंदमः ।
प्रत्युद्ययौ महातेजाः शक्रं बलिरिवासुरः ॥ ००८ ॥

ततः संमन्त्र्य कृष्णेन कृतस्वस्त्ययनो बली ।
भीमसेनो जरासंधमाससाद युयुत्सया ॥ ००९ ॥

ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः ।
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ॥ ०१० ॥

तयोरथ भुजाघातान्निग्रहप्रग्रहात्तथा ।
आसीत्सुभीमसंह्रादो वज्रपर्वतयोरिव ॥ ०११ ॥

उभौ परमसंहृष्टौ बलेनातिबलावुभौ ।
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ॥ ०१२ ॥

तद्भीममुत्सार्य जनं युद्धमासीदुपह्वरे ।
बलिनोः संयुगे राजन्वृत्रवासवयोरिव ॥ ०१३ ॥

प्रकर्षणाकर्षणाभ्यामभ्याकर्षविकर्षणैः ।
आकर्षेतां तथान्योन्यं जानुभिश्चाभिजघ्नतुः ॥ ०१४ ॥

ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
पाषाणसंघातनिभैः प्रहारैरभिजघ्नतुः ॥ ०१५ ॥

व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ ०१६ ॥

कार्त्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि ।
अनारतं दिवारात्रमविश्रान्तमवर्तत ॥ ०१७ ॥

तद्वृत्तं तु त्रयोदश्यां समवेतं महात्मनोः ।
चतुर्दश्यां निशायां तु निवृत्तो मागधः क्लमात् ॥ ०१८ ॥

तं राजानं तथा क्लान्तं दृष्ट्वा राजञ्जनार्दनः ।
उवाच भीमकर्माणं भीमं संबोधयन्निव ॥ ०१९ ॥

क्लान्तः शत्रुर्न कौन्तेय लभ्यः पीडयितुं रणे ।
पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मनः ॥ ०२० ॥

तस्मात्ते नैव कौन्तेय पीडनीयो नराधिपः ।
सममेतेन युध्यस्व बाहुभ्यां भरतर्षभ ॥ ०२१ ॥

एवमुक्तः स कृष्णेन पाण्डवः परवीरहा ।
जरासंधस्य तद्रन्ध्रं ज्ञात्वा चक्रे मतिं वधे ॥ ०२२ ॥

ततस्तमजितं जेतुं जरासंधं वृकोदरः ।
संरभ्य बलिनां मुख्यो जग्राह कुरुनन्दनः ॥ ०२३ ॥

---

# अध्याय ०२२

वैशंपायन उवाच ॥

भीमसेनस्ततः कृष्णमुवाच यदुनन्दनम् ।
बुद्धिमास्थाय विपुलां जरासंधजिघांसया ॥ ००१ ॥

नायं पापो मया कृष्ण युक्तः स्यादनुरोधितुम् ।
प्राणेन यदुशार्दूल बद्धवङ्क्षणवाससा ॥ ००२ ॥

एवमुक्तस्ततः कृष्णः प्रत्युवाच वृकोदरम् ।
त्वरयन्पुरुषव्याघ्रो जरासंधवधेप्सया ॥ ००३ ॥

यत्ते दैवं परं सत्त्वं यच्च ते मातरिश्वनः ।
बलं भीम जरासंधे दर्शयाशु तदद्य नः ॥ ००४ ॥

एवमुक्तस्तदा भीमो जरासंधमरिंदमः ।
उत्क्षिप्य भ्रामयद्राजन्बलवन्तं महाबलः ॥ ००५ ॥

भ्रामयित्वा शतगुणं भुजाभ्यां भरतर्षभ ।
बभञ्ज पृष्ठे सङ्क्षिप्य निष्पिष्य विननाद च ॥ ००६ ॥

तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्जतः ।
अभवत्तुमुलो नादः सर्वप्राणिभयङ्करः ॥ ००७ ॥

वित्रेसुर्मागधाः सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः ।
भीमसेनस्य नादेन जरासंधस्य चैव ह ॥ ००८ ॥

किं नु स्विद्धिमवान्भिन्नः किं नु स्विद्दीर्यते मही ।
इति स्म मागधा जज्ञुर्भीमसेनस्य निस्वनात् ॥ ००९ ॥

ततो राजकुलद्वारि प्रसुप्तमिव तं नृपम् ।
रात्रौ परासुमुत्सृज्य निश्चक्रमुररिंदमाः ॥ ०१० ॥

जरासंधरथं कृष्णो योजयित्वा पताकिनम् ।
आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान् ॥ ०११ ॥

ते वै रत्नभुजं कृष्णं रत्नार्हं पृथिवीश्वराः ।
राजानश्चक्रुरासाद्य मोक्षिता महतो भयात् ॥ ०१२ ॥

अक्षतः शस्त्रसंपन्नो जितारिः सह राजभिः ।
रथमास्थाय तं दिव्यं निर्जगाम गिरिव्रजात् ॥ ०१३ ॥

यः स सोदर्यवान्नाम द्वियोधः कृष्णसारथिः ।
अभ्यासघाती संदृश्यो दुर्जयः सर्वराजभिः ॥ ०१४ ॥

भीमार्जुनाभ्यां योधाभ्यामास्थितः कृष्णसारथिः ।
शुशुभे रथवर्योऽसौ दुर्जयः सर्वधन्विभिः ॥ ०१५ ॥

शक्रविष्णू हि सङ्ग्रामे चेरतुस्तारकामये ।
रथेन तेन तं कृष्ण उपारुह्य ययौ तदा ॥ ०१६ ॥

तप्तचामीकराभेण किङ्किणीजालमालिना ।
मेघनिर्घोषनादेन जैत्रेणामित्रघातिना ॥ ०१७ ॥

येन शक्रो दानवानां जघान नवतीर्नव ।
तं प्राप्य समहृष्यन्त रथं ते पुरुषर्षभाः ॥ ०१८ ॥

ततः कृष्णं महाबाहुं भ्रातृभ्यां सहितं तदा ।
रथस्थं मागधा दृष्ट्वा समपद्यन्त विस्मिताः ॥ ०१९ ॥

हयैर्दिव्यैः समायुक्तो रथो वायुसमो जवे ।
अधिष्ठितः स शुशुभे कृष्णेनातीव भारत ॥ ०२० ॥

असङ्गी देवविहितस्तस्मिन्रथवरे ध्वजः ।
योजनाद्ददृशे श्रीमानिन्द्रायुधसमप्रभः ॥ ०२१ ॥

चिन्तयामास कृष्णोऽथ गरुत्मन्तं स चाभ्ययात् ।

क्षणे तस्मिन्स तेनासीच्चैत्ययूप इवोच्छ्रितः ॥ ०२२ ॥

व्यादितास्यैर्महानादैः सह भूतैर्ध्वजालयैः ।
तस्थौ रथवरे तस्मिन्गरुत्मान्पन्नगाशनः ॥ ०२३ ॥

दुर्निरीक्ष्यो हि भूतानां तेजसाभ्यधिकं बभौ ।
आदित्य इव मध्याह्ने सहस्रकिरणावृतः ॥ ०२४ ॥

न स सज्जति वृक्षेषु शस्त्रैश्चापि न रिष्यते ।
दिव्यो ध्वजवरो राजन्दृश्यते देवमानुषैः ॥ ०२५ ॥

तमास्थाय रथं दिव्यं पर्जन्यसमनिस्वनम् ।
निर्ययौ पुरुषव्याघ्रः पाण्डवाभ्यां सहाच्युतः ॥ ०२६ ॥

यं लेभे वासवाद्राजा वसुस्तस्माद्बृहद्रथः ।
बृहद्रथात्क्रमेणैव प्राप्तो बार्हद्रथं नृपम् ॥ ०२७ ॥

स निर्ययौ महाबाहुः पुण्डरीकेक्षणस्ततः ।
गिरिव्रजाद्बहिस्तस्थौ समे देशे महायशाः ॥ ०२८ ॥

तत्रैनं नागराः सर्वे सत्कारेणाभ्ययुस्तदा ।
ब्राह्मणप्रमुखा राजन्विधिदृष्टेन कर्मणा ॥ ०२९ ॥

बन्धनाद्विप्रमुक्ताश्च राजानो मधुसूदनम् ।
पूजयामासुरूचुश्च सान्त्वपूर्वमिदं वचः ॥ ०३० ॥

नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन ।
भीमार्जुनबलोपेते धर्मस्य परिपालनम् ॥ ०३१ ॥

जरासंधह्रदे घोरे दुःखपङ्के निमज्जताम् ।
राज्ञां समभ्युद्धरणं यदिदं कृतमद्य ते ॥ ०३२ ॥

विष्णो समवसन्नानां गिरिदुर्गे सुदारुणे ।
दिष्ट्या मोक्षाद्यशो दीप्तमाप्तं ते पुरुषोत्तम ॥ ०३३ ॥

किं कुर्मः पुरुषव्याघ्र ब्रवीहि पुरुषर्षभ ।
कृतमित्येव तज्ज्ञेयं नृपैर्यद्यपि दुष्करम् ॥ ०३४ ॥

तानुवाच हृषीकेशः समाश्वास्य महामनाः ।
युधिष्ठिरो राजसूयं क्रतुमाहर्तुमिच्छति ॥ ०३५ ॥

तस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
सर्वैर्भवद्भिर्यज्ञार्थे साहाय्यं दीयतामिति ॥ ०३६ ॥

ततः प्रतीतमनसस्ते नृपा भरतर्षभ ।
तथेत्येवाब्रुवन्सर्वे प्रतिजज्ञुश्च तां गिरम् ॥ ०३७ ॥

रत्नभाजं च दाशार्हं चक्रुस्ते पृथिवीश्वराः ।
कृच्छ्राज्जग्राह गोविन्दस्तेषां तदनुकम्पया ॥ ०३८ ॥

जरासंधात्मजश्चैव सहदेवो महारथः ।
निर्ययौ सजनामात्यः पुरस्कृत्य पुरोहितम् ॥ ०३९ ॥

स नीचैः प्रश्रितो भूत्वा बहुरत्नपुरोगमः ।
सहदेवो नृणां देवं वासुदेवमुपस्थितः ॥ ०४० ॥

भयार्ताय ततस्तस्मै कृष्णो दत्त्वाभयं तदा ।
अभ्यषिञ्चत तत्रैव जरासंधात्मजं तदा ॥ ०४१ ॥

गत्वैकत्वं च कृष्णेन पार्थाभ्यां चैव सत्कृतः ।
विवेश राजा मतिमान्पुनर्बार्हद्रथं पुरम् ॥ ०४२ ॥

कृष्णस्तु सह पार्थाभ्यां श्रिया परमया ज्वलन् ।
रत्नान्यादाय भूरीणि प्रययौ पुष्करेक्षणः ॥ ०४३ ॥

इन्द्रप्रस्थमुपागम्य पाण्डवाभ्यां सहाच्युतः ।
समेत्य धर्मराजानं प्रीयमाणोऽभ्यभाषत ॥ ०४४ ॥

दिष्ट्या भीमेन बलवाञ्जरासंधो निपातितः ।
राजानो मोक्षिताश्चेमे बन्धनान्नृपसत्तम ॥ ०४५ ॥

दिष्ट्या कुशलिनौ चेमौ भीमसेनधनञ्जयौ ।
पुनः स्वनगरं प्राप्तावक्षताविति भारत ॥ ०४६ ॥

ततो युधिष्ठिरः कृष्णं पूजयित्वा यथार्हतः ।
भीमसेनार्जुनौ चैव प्रहृष्टः परिषस्वजे ॥ ०४७ ॥

ततः क्षीणे जरासंधे भ्रातृभ्यां विहितं जयम् ।
अजातशत्रुरासाद्य मुमुदे भ्रातृभिः सह ॥ ०४८ ॥

यथावयः समागम्य राजभिस्तैश्च पाण्डवः ।
सत्कृत्य पूजयित्वा च विससर्ज नराधिपान् ॥ ०४९ ॥

युधिष्ठिराभ्यनुज्ञातास्ते नृपा हृष्टमानसाः ।
जग्मुः स्वदेशांस्त्वरिता यानैरुच्चावचैस्ततः ॥ ०५० ॥

एवं पुरुषशार्दूलो महाबुद्धिर्जनार्दनः ।
पाण्डवैर्घातयामास जरासंधमरिं तदा ॥ ०५१ ॥

घातयित्वा जरासंधं बुद्धिपूर्वमरिंदमः ।
धर्मराजमनुज्ञाप्य पृथां कृष्णां च भारत ॥ ०५२ ॥

सुभद्रां भीमसेनं च फल्गुनं यमजौ तथा ।

धौम्यमामन्त्रयित्वा च प्रययौ स्वां पुरीं प्रति ॥ ०५३ ॥

तेनैव रथमुख्येन तरुणादित्यवर्चसा ।
धर्मराजविसृष्टेन दिव्येनानादयन्दिशः ॥ ०५४ ॥

ततो युधिष्ठिरमुखाः पाण्डवा भरतर्षभ ।
प्रदक्षिणमकुर्वन्त कृष्णमक्लिष्टकारिणम् ॥ ०५५ ॥

ततो गते भगवति कृष्णे देवकिनन्दने ।
जयं लब्ध्वा सुविपुलं राज्ञामभयदास्तदा ॥ ०५६ ॥

संवर्धितौजसो भूयः कर्मणा तेन भारत ।
द्रौपद्याः पाण्डवा राजन्परां प्रीतिमवर्धयन् ॥ ०५७ ॥

तस्मिन्काले तु यद्युक्तं धर्मकामार्थसंहितम् ।
तद्राजा धर्मतश्चक्रे राज्यपालनकीर्तिमान् ॥ ०५८ ॥

---

# दिग्विजयपर्व

## अध्याय ०२३

वैशंपायन उवाच ॥

पार्थः प्राप्य धनुःश्रेष्ठमक्षय्यौ च महेषुधी ।
रथं ध्वजं सभां चैव युधिष्ठिरमभाषत ॥ ००१ ॥

धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।

प्राप्तमेतन्मया राजन्दुष्प्रापं यदभीप्सितम् ॥ ००२ ॥

तत्र कृत्यमहं मन्ये कोशस्यास्य विवर्धनम् ।
करमाहारयिष्यामि राज्ञः सर्वान्नृपोत्तम ॥ ००३ ॥

विजयाय प्रयास्यामि दिशं धनदरक्षिताम् ।
तिथावथ मुहूर्ते च नक्षत्रे च तथा शिवे ॥ ००४ ॥

धनञ्जयवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
स्निग्धगम्भीरनादिन्या तं गिरा प्रत्यभाषत ॥ ००५ ॥

स्वस्ति वाच्यार्हतो विप्रान्प्रयाहि भरतर्षभ ।
दुर्हृदामप्रहर्षाय सुहृदां नन्दनाय च ॥ ००६ ॥

विजयस्ते ध्रुवं पार्थ प्रियं काममवाप्नुहि ॥ ००६ ॥

इत्युक्तः प्रययौ पार्थः सैन्येन महता वृतः ।
अग्निदत्तेन दिव्येन रथेनाद्भुतकर्मणा ॥ ००७ ॥

तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ ।
ससैन्याः प्रययुः सर्वे धर्मराजाभिपूजिताः ॥ ००८ ॥

दिशं धनपतेरिष्टामजयत्पाकशासनिः ।
भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणाम् ॥ ००९ ॥

प्रतीचीं नकुलो राजन्दिशं व्यजयदस्त्रवित् ।
खाण्डवप्रस्थमध्यास्ते धर्मराजो युधिष्ठिरः ॥ ०१० ॥

जनमेजय उवाच ॥

दिशामभिजयं ब्रह्मन्विस्तरेणानुकीर्तय ।

न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ०११ ॥

वैशंपायन उवाच ॥

धनञ्जयस्य वक्ष्यामि विजयं पूर्वमेव ते ।
यौगपद्येन पार्थैर्हि विजितेयं वसुंधरा ॥ ०१२ ॥

पूर्वं कुणिन्दविषये वशे चक्रे महीपतीन् ।
धनञ्जयो महाबाहुर्नातितीव्रेण कर्मणा ॥ ०१३ ॥

आनर्तान्कालकूटांश्च कुणिन्दांश्च विजित्य सः ।
सुमण्डलं पापजितं कृतवाननुसैनिकम् ॥ ०१४ ॥

स तेन सहितो राजन्सव्यसाची परंतपः ।
विजिग्ये सकलं द्वीपं प्रतिविन्ध्यं च पार्थिवम् ॥ ०१५ ॥

सकलद्वीपवासांश्च सप्तद्वीपे च ये नृपाः ।
अर्जुनस्य च सैन्यानां विग्रहस्तुमुलोऽभवत् ॥ ०१६ ॥

स तानपि महेष्वासो विजित्य भरतर्षभ ।
तैरेव सहितः सर्वैः प्राग्ज्योतिषमुपाद्रवत् ॥ ०१७ ॥

तत्र राजा महानासीद्भगदत्तो विशां पते ।
तेनासीत्सुमहद्युद्धं पाण्डवस्य महात्मनः ॥ ०१८ ॥

स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत् ।
अन्यैश्च बहुभिर्योधैः सागरानूपवासिभिः ॥ ०१९ ॥

ततः स दिवसानष्टौ योधयित्वा धनञ्जयम् ।
प्रहसन्नब्रवीद्राजा सङ्ग्रामे विगतक्लमः ॥ ०२० ॥

उपपन्नं महाबाहो त्वयि पाण्डवनन्दन ।
पाकशासनदायादे वीर्यमाहवशोभिनि ॥ ०२१ ॥

अहं सखा सुरेन्द्रस्य शक्रादनवमो रणे ।
न च शक्नोमि ते तात स्थातुं प्रमुखतो युधि ॥ ०२२ ॥

किमीप्सितं पाण्डवेय ब्रूहि किं करवाणि ते ।
यद्वक्ष्यसि महाबाहो तत्करिष्यामि पुत्रक ॥ ०२३ ॥

अर्जुन उवाच ॥

कुरूणामृषभो राजा धर्मपुत्रो युधिष्ठिरः ।
तस्य पार्थिवतामीप्से करस्तस्मै प्रदीयताम् ॥ ०२४ ॥

भवान्पितृसखा चैव प्रीयमाणो मयापि च ।
ततो नाज्ञापयामि त्वां प्रीतिपूर्वं प्रदीयताम् ॥ ०२५ ॥

भगदत्त उवाच ॥

कुन्तीमातर्यथा मे त्वं तथा राजा युधिष्ठिरः ।
सर्वमेतत्करिष्यामि किं चान्यत्करवाणि ते ॥ ०२६ ॥

---

# अध्याय ०२४

वैशंपायन उवाच ॥

तं विजित्य महाबाहुः कुन्तीपुत्रो धनञ्जयः ।
प्रययावुत्तरां तस्माद्दिशं धनदपालिताम् ॥ ००१ ॥

अन्तर्गिरिं च कौन्तेयस्तथैव च बहिर्गिरिम् ।
तथोपरिगिरिं चैव विजिग्ये पुरुषर्षभः ॥ ००२ ॥

विजित्य पर्वतान्सर्वान्ये च तत्र नराधिपाः ।
तान्वशे स्थापयित्वा स रत्नान्यादाय सर्वशः ॥ ००३ ॥

तैरेव सहितः सर्वैरनुरज्य च तान्नृपान् ।
कुलूतवासिनं राजन्बृहन्तमुपजग्मिवान् ॥ ००४ ॥

मृदङ्गवरनादेन रथनेमिस्वनेन च ।
हस्तिनां च निनादेन कम्पयन्वसुधामिमाम् ॥ ००५ ॥

ततो बृहन्तस्तरुणो बलेन चतुरङ्गिणा ।
निष्क्रम्य नगरात्तस्माद्योधयामास पाण्डवम् ॥ ००६ ॥

सुमहान्संनिपातोऽभूद्धनञ्जयबृहन्तयोः ।
न शशाक बृहन्तस्तु सोढुं पाण्डवविक्रमम् ॥ ००७ ॥

सोऽविषह्यतमं ज्ञात्वा कौन्तेयं पर्वतेश्वरः ।
उपावर्तत दुर्मेधा रत्नान्यादाय सर्वशः ॥ ००८ ॥

स तद्राज्यमवस्थाप्य कुलूतसहितो ययौ ।
सेनाबिन्दुमथो राजन्राज्यादाशु समाक्षिपत् ॥ ००९ ॥

मोदापुरं वामदेवं सुदामानं सुसङ्कुलम् ।
कुलूतानुत्तरांश्चैव तांश्च राज्ञः समानयत् ॥ ०१० ॥

तत्रस्थः पुरुषैरेव धर्मराजस्य शासनात् ।
व्यजयद्धनञ्जयो राजन्देशान्पञ्च प्रमाणतः ॥ ०११ ॥

स दिवःप्रस्थमासाद्य सेनाबिन्दोः पुरं महत् ।
बलेन चतुरङ्गेण निवेशमकरोत्प्रभुः ॥ ०१२ ॥

स तैः परिवृतः सर्वैर्विष्वगश्वं नराधिपम् ।
अभ्यगच्छन्महातेजाः पौरवं पुरुषर्षभः ॥ ०१३ ॥

विजित्य चाहवे शूरान्पार्वतीयान्महारथान् ।
ध्वजिन्या व्यजयद्राजन्पुरं पौरवरक्षितम् ॥ ०१४ ॥

पौरवं तु विनिर्जित्य दस्यून्पर्वतवासिनः ।
गणानुत्सवसङ्केतानजयत्सप्त पाण्डवः ॥ ०१५ ॥

ततः काश्मीरकान्वीरान्क्षत्रियान्क्षत्रियर्षभः ।
व्यजयल्लोहितं चैव मण्डलैर्दशभिः सह ॥ ०१६ ॥

ततस्त्रिगर्तान्कौन्तेयो दार्वान्कोकनदाश्च ये ।
क्षत्रिया बहवो राजन्नुपावर्तन्त सर्वशः ॥ ०१७ ॥

अभिसारीं ततो रम्यां विजिग्ये कुरुनन्दनः ।
उरशावासिनं चैव रोचमानं रणेऽजयत् ॥ ०१८ ॥

ततः सिंहपुरं रम्यं चित्रायुधसुरक्षितम् ।
प्रामथद्बलमास्थाय पाकशासनिराहवे ॥ ०१९ ॥

ततः सुह्मांश्च चोलांश्च किरीटी पाण्डवर्षभः ।
सहितः सर्वसैन्येन प्रामथत्कुरुनन्दनः ॥ ०२० ॥

ततः परमविक्रान्तो बाह्लीकान्कुरुनन्दनः ।
महता परिमर्देन वशे चक्रे दुरासदान् ॥ ०२१ ॥

गृहीत्वा तु बलं सारं फल्गु चोत्सृज्य पाण्डवः ।

दरदान्सह काम्बोजैरजयत्पाकशासनिः ॥ ०२२ ॥

प्रागुत्तरां दिशं ये च वसन्त्याश्रित्य दस्यवः ।
निवसन्ति वने ये च तान्सर्वानजयत्प्रभुः ॥ ०२३ ॥

लोहान्परमकाम्बोजानृषिकानुत्तरानपि ।
सहितांस्तान्महाराज व्यजयत्पाकशासनिः ॥ ०२४ ॥

ऋषिकेषु तु सङ्ग्रामो बभूवातिभयङ्करः ।
तारकामयसङ्काशः परमर्षिकपार्थयोः ॥ ०२५ ॥

स विजित्य ततो राजन्नृषिकान्रणमूर्धनि ।
शुकोदरसमप्रख्यान्हयानष्टौ समानयत् ॥ ०२६ ॥

मयूरसदृशानन्यानुभयानेव चापरान् ॥ ०२६ ॥

स विनिर्जित्य सङ्ग्रामे हिमवन्तं सनिष्कुटम् ।
श्वेतपर्वतमासाद्य न्यवसत्पुरुषर्षभः ॥ ०२७ ॥

---

# अध्याय ०२५

वैशंपायन उवाच ॥

स श्वेतपर्वतं वीरः समतिक्रम्य भारत ।
देशं किंपुरुषावासं द्रुमपुत्रेण रक्षितम् ॥ ००१ ॥

महता संनिपातेन क्षत्रियान्तकरेण ह ।

व्यजयत्पाण्डवश्रेष्ठः करे चैव न्यवेशयत् ॥ ००२ ॥

तं जित्वा हाटकं नाम देशं गुह्यकरक्षितम् ।
पाकशासनिरव्यग्रः सहसैन्यः समासदत् ॥ ००३ ॥

तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम् ।
ऋषिकुल्याश्च ताः सर्वा ददर्श कुरुनन्दनः ॥ ००४ ॥

सरो मानसमासाद्य हाटकानभितः प्रभुः ।
गन्धर्वरक्षितं देशं व्यजयत्पाण्डवस्ततः ॥ ००५ ॥

तत्र तित्तिरिकल्माषान्मण्डूकाक्षान्हयोत्तमान् ।
लेभे स करमत्यन्तं गन्धर्वनगरात्तदा ॥ ००६ ॥

उत्तरं हरिवर्षं तु समासाद्य स पाण्डवः ।
इयेष जेतुं तं देशं पाकशासननन्दनः ॥ ००७ ॥

तत एनं महाकाया महावीर्या महाबलाः ।
द्वारपालाः समासाद्य हृष्टा वचनमब्रुवन् ॥ ००८ ॥

पार्थ नेदं त्वया शक्यं पुरं जेतुं कथञ्चन ।
उपावर्तस्व कल्याण पर्याप्तमिदमच्युत ॥ ००९ ॥

इदं पुरं यः प्रविशेद्ध्रुवं स न भवेन्नरः ।
प्रीयामहे त्वया वीर पर्याप्तो विजयस्तव ॥ ०१० ॥

न चापि किञ्चिज्जेतव्यमर्जुनात्र प्रदृश्यते ।
उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्तते ॥ ०११ ॥

प्रविष्टश्चापि कौन्तेय नेह द्रक्ष्यसि किञ्चन ।
न हि मानुषदेहेन शक्यमत्राभिवीक्षितुम् ॥ ०१२ ॥

अथेह पुरुषव्याघ्र किञ्चिदन्यच्चिकीर्षसि ।
तद्ब्रवीहि करिष्यामो वचनात्तव भारत ॥ ०१३ ॥

ततस्तानब्रवीद्राजन्नर्जुनः पाकशासनिः ।
पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः ॥ ०१४ ॥

न प्रवेक्ष्यामि वो देशं बाध्यत्वं यदि मानुषैः ।
युधिष्ठिराय यत्किञ्चित्करवन्नः प्रदीयताम् ॥ ०१५ ॥

ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
मोकाजिनानि दिव्यानि तस्मै ते प्रददुः करम् ॥ ०१६ ॥

एवं स पुरुषव्याघ्रो विजिग्ये दिशमुत्तराम् ।
सङ्ग्रामान्सुबहून्कृत्वा क्षत्रियैर्दस्युभिस्तथा ॥ ०१७ ॥

स विनिर्जित्य राज्ञस्तान्करे च विनिवेश्य ह ।
धनान्यादाय सर्वेभ्यो रत्नानि विविधानि च ॥ ०१८ ॥

हयांस्तित्तिरिकल्माषाञ्शुकपत्रनिभानपि ।
मयूरसदृशांश्चान्यान्सर्वाननिलरंहसः ॥ ०१९ ॥

वृतः सुमहता राजन्बलेन चतुरङ्गिणा ।
आजगाम पुनर्वीरः शक्रप्रस्थं पुरोत्तमम् ॥ ०२० ॥

---

# अध्याय ०२६

वैशंपायन उवाच ॥

एतस्मिन्नेव काले तु भीमसेनोऽपि वीर्यवान् ।
धर्मराजमनुज्ञाप्य ययौ प्राचीं दिशं प्रति ॥ ००१ ॥

महता बलचक्रेण परराष्ट्रावमर्दिना ।
वृतो भरतशार्दूलो द्विषच्छोकविवर्धनः ॥ ००२ ॥

स गत्वा राजशार्दूलः पाञ्चालानां पुरं महत् ।
पाञ्चालान्विविधोपायैः सान्त्वयामास पाण्डवः ॥ ००३ ॥

ततः स गण्डकीं शूरो विदेहांश्च नरर्षभः ।
विजित्याल्पेन कालेन दशार्णानगमत्प्रभुः ॥ ००४ ॥

तत्र दाशार्णको राजा सुधर्मा लोमहर्षणम् ।
कृतवान्कर्म भीमेन महद्युद्धं निरायुधम् ॥ ००५ ॥

भीमसेनस्तु तद्दृष्ट्वा तस्य कर्म परंतपः ।
अधिसेनापतिं चक्रे सुधर्माणं महाबलम् ॥ ००६ ॥

ततः प्राचीं दिशं भीमो ययौ भीमपराक्रमः ।
सैन्येन महता राजन्कम्पयन्निव मेदिनीम् ॥ ००७ ॥

सोऽश्वमेधेश्वरं राजन्रोचमानं सहानुजम् ।
जिगाय समरे वीरो बलेन बलिनां वरः ॥ ००८ ॥

स तं निर्जित्य कौन्तेयो नातितीव्रेण कर्मणा ।
पूर्वदेशं महावीर्यो विजिग्ये कुरुनन्दनः ॥ ००९ ॥

ततो दक्षिणमागम्य पुलिन्दनगरं महत् ।
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ॥ ०१० ॥

ततस्तु धर्मराजस्य शासनाद्भरतर्षभः ।
शिशुपालं महावीर्यमभ्ययाज्जनमेजय ॥ ०११ ॥

चेदिराजोऽपि तच्छ्रुत्वा पाण्डवस्य चिकीर्षितम् ।
उपनिष्क्रम्य नगरात्प्रत्यगृह्णात्परंतपः ॥ ०१२ ॥

तौ समेत्य महाराज कुरुचेदिवृषौ तदा ।
उभयोरात्मकुलयोः कौशल्यं पर्यपृच्छताम् ॥ ०१३ ॥

ततो निवेद्य तद्राष्ट्रं चेदिराजो विशां पते ।
उवाच भीमं प्रहसन्किमिदं कुरुषेऽनघ ॥ ०१४ ॥

तस्य भीमस्तदाचख्यौ धर्मराजचिकीर्षितम् ।
स च तत्प्रतिगृह्यैव तथा चक्रे नराधिपः ॥ ०१५ ॥

ततो भीमस्तत्र राजन्नुषित्वा त्रिदशाः क्षपाः ।
सत्कृतः शिशुपालेन ययौ सबलवाहनः ॥ ०१६ ॥

---

# अध्याय ०२७

वैशंपायन उवाच ॥

ततः कुमारविषये श्रेणिमन्तमथाजयत् ।
कोसलाधिपतिं चैव बृहद्बलमरिंदमः ॥ ००१ ॥

अयोध्यायां तु धर्मज्ञं दीर्घप्रज्ञं महाबलम् ।
अजयत्पाण्डवश्रेष्ठो नातितीव्रेण कर्मणा ॥ ००२ ॥

ततो गोपालकच्छं च सोत्तमानपि चोत्तरान् ।
मल्लानामधिपं चैव पार्थिवं व्यजयत्प्रभुः ॥ ००३ ॥

ततो हिमवतः पार्श्वे समभ्येत्य जरद्गवम् ।
सर्वमल्पेन कालेन देशं चक्रे वशे बली ॥ ००४ ॥

एवं बहुविधान्देशान्विजित्य पुरुषर्षभः ।
उन्नाटमभितो जिग्ये कुक्षिमन्तं च पर्वतम् ॥ ००५ ॥

पाण्डवः सुमहावीर्यो बलेन बलिनां वरः ॥ ००५ ॥

स काशिराजं समरे सुबन्धुमनिवर्तिनम् ।
वशे चक्रे महाबाहुर्भीमो भीमपराक्रमः ॥ ००६ ॥

ततः सुपार्श्वमभितस्तथा राजपतिं क्रथम् ।
युध्यमानं बलात्संख्ये विजिग्ये पाण्डवर्षभः ॥ ००७ ॥

ततो मत्स्यान्महातेजा मलयांश्च महाबलान् ।
अनवद्यान्गयांश्चैव पशुभूमिं च सर्वशः ॥ ००८ ॥

निवृत्य च महाबाहुर्मदर्वीकं महीधरम् ।
सोपदेशं विनिर्जित्य प्रययावुत्तरामुखः ॥ ००९ ॥

वत्सभूमिं च कौन्तेयो विजिग्ये बलवान्बलात् ॥ ००९ ॥

भर्गाणामधिपं चैव निषादाधिपतिं तथा ।
विजिग्ये भूमिपालांश्च मणिमत्प्रमुखान्बहून् ॥ ०१० ॥

ततो दक्षिणमल्लांश्च भोगवन्तं च पाण्डवः ।
तरसैवाजयद्भीमो नातितीव्रेण कर्मणा ॥ ०११ ॥

शर्मकान्वर्मकांश्चैव सान्त्वेनैवाजयत्प्रभुः ।
वैदेहकं च राजानं जनकं जगतीपतिम् ॥ ०१२ ॥

विजिग्ये पुरुषव्याघ्रो नातितीव्रेण कर्मणा ॥ ०१२ ॥

वैदेहस्थस्तु कौन्तेय इन्द्रपर्वतमन्तिकात् ।
किरातानामधिपतीन्व्यजयत्सप्त पाण्डवः ॥ ०१३ ॥

ततः सुह्मान्प्राच्यसुह्मान्समक्षांश्चैव वीर्यवान् ।
विजित्य युधि कौन्तेयो मागधानुपयाद्बली ॥ ०१४ ॥

दण्डं च दण्डधारं च विजित्य पृथिवीपतीन् ।
तैरेव सहितः सर्वैर्गिरिव्रजमुपाद्रवत् ॥ ०१५ ॥

जारासंधिं सान्त्वयित्वा करे च विनिवेश्य ह ।
तैरेव सहितो राजन्कर्णमभ्यद्रवद्बली ॥ ०१६ ॥

स कम्पयन्निव महीं बलेन चतुरङ्गिणा ।
युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ॥ ०१७ ॥

स कर्णं युधि निर्जित्य वशे कृत्वा च भारत ।
ततो विजिग्ये बलवान्राज्ञः पर्वतवासिनः ॥ ०१८ ॥

अथ मोदागिरिं चैव राजानं बलवत्तरम् ।
पाण्डवो बाहुवीर्येण निजघान महामृधे ॥ ०१९ ॥

ततः पौण्ड्राधिपं वीरं वासुदेवं महाबलम् ।
कौशिकीकच्छनिलयं राजानं च महौजसम् ॥ ०२० ॥

उभौ बलवृतौ वीरावुभौ तीव्रपराक्रमौ ।

निर्जित्याजौ महाराज वङ्गराजमुपाद्रवत् ॥ ०२१ ॥

समुद्रसेनं निर्जित्य चन्द्रसेनं च पार्थिवम् ।
ताम्रलिप्तं च राजानं काचं वङ्गाधिपं तथा ॥ ०२२ ॥

सुह्मानामधिपं चैव ये च सागरवासिनः ।
सर्वान्म्लेच्छगणांश्चैव विजिग्ये भरतर्षभः ॥ ०२३ ॥

एवं बहुविधान्देशान्विजित्य पवनात्मजः ।
वसु तेभ्य उपादाय लौहित्यमगमद्बली ॥ ०२४ ॥

स सर्वान्म्लेच्छनृपतीन्सागरद्वीपवासिनः ।
करमाहारयामास रत्नानि विविधानि च ॥ ०२५ ॥

चन्दनागुरुवस्त्राणि मणिमुक्तमनुत्तमम् ।
काञ्चनं रजतं वज्रं विद्रुमं च महाधनम् ॥ ०२६ ॥

स कोटिशतसंख्येन धनेन महता तदा ।
अभ्यवर्षदमेयात्मा धनवर्षेण पाण्डवम् ॥ ०२७ ॥

इन्द्रप्रस्थमथागम्य भीमो भीमपराक्रमः ।
निवेदयामास तदा धर्मराजाय तद्धनम् ॥ ०२८ ॥

---

# अध्याय ०२८

वैशंपायन उवाच ॥

तथैव सहदेवोऽपि धर्मराजेन पूजितः ।

महत्या सेनया सार्धं प्रययौ दक्षिणां दिशम् ॥ ००१ ॥

स शूरसेनान्कार्त्स्न्येन पूर्वमेवाजयत्प्रभुः ।
मत्स्यराजं च कौरव्यो वशे चक्रे बलाद्बली ॥ ००२ ॥

अधिराजाधिपं चैव दन्तवक्रं महाहवे ।
जिगाय करदं चैव स्वराज्ये संन्यवेशयत् ॥ ००३ ॥

सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ।
तथैवापरमत्स्यांश्च व्यजयत्स पटच्चरान् ॥ ००४ ॥

निषादभूमिं गोशृङ्गं पर्वतप्रवरं तथा ।
तरसा व्यजयद्धीमाञ्श्रेणिमन्तं च पार्थिवम् ॥ ००५ ॥

नवराष्ट्रं विनिर्जित्य कुन्तिभोजमुपाद्रवत् ।
प्रीतिपूर्वं च तस्यासौ प्रतिजग्राह शासनम् ॥ ००६ ॥

ततश्चर्मण्वतीकूले जम्भकस्यात्मजं नृपम् ।
ददर्श वासुदेवेन शेषितं पूर्ववैरिणा ॥ ००७ ॥

चक्रे तत्र स सङ्ग्रामं सह भोजेन भारत ।
स तमाजौ विनिर्जित्य दक्षिणाभिमुखो ययौ ॥ ००८ ॥

करांस्तेभ्य उपादाय रत्नानि विविधानि च ।
ततस्तैरेव सहितो नर्मदामभितो ययौ ॥ ००९ ॥

विन्दानुविन्दावावन्त्यौ सैन्येन महता वृतौ ।
जिगाय समरे वीरावाश्विनेयः प्रतापवान् ॥ ०१० ॥

ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ ।
तत्र नीलेन राज्ञा स चक्रे युद्धं नरर्षभः ॥ ०११ ॥

पाण्डवः परवीरघ्नः सहदेवः प्रतापवान् ।
ततोऽस्य सुमहद्युद्धमासीद्भीरुभयङ्करम् ॥ ०१२ ॥

सैन्यक्षयकरं चैव प्राणानां संशयाय च ।
चक्रे तस्य हि साहाय्यं भगवान्हव्यवाहनः ॥ ०१३ ॥

ततो हया रथा नागाः पुरुषाः कवचानि च ।
प्रदीप्तानि व्यदृश्यन्त सहदेवबले तदा ॥ ०१४ ॥

ततः सुसंभ्रान्तमना बभूव कुरुनन्दनः ।
नोत्तरं प्रतिवक्तुं च शक्तोऽभूज्जनमेजय ॥ ०१५ ॥

जनमेजय उवाच ॥

किमर्थं भगवानग्निः प्रत्यमित्रोऽभवद्युधि ।
सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज ॥ ०१६ ॥

वैशंपायन उवाच ॥

तत्र माहिष्मतीवासी भगवान्हव्यवाहनः ।
श्रूयते निगृहीतो वै पुरस्तात्पारदारिकः ॥ ०१७ ॥

नीलस्य राज्ञः पूर्वेषामुपनीतश्च सोऽभवत् ।
तदा ब्राह्मणरूपेण चरमाणो यदृच्छया ॥ ०१८ ॥

तं तु राजा यथाशास्त्रमन्वशाद्धार्मिकस्तदा ।
प्रजज्वाल ततः कोपाद्भगवान्हव्यवाहनः ॥ ०१९ ॥

तं दृष्ट्वा विस्मितो राजा जगाम शिरसा कविम् ।
चक्रे प्रसादं च तदा तस्य राज्ञो विभावसुः ॥ ०२० ॥

वरेण छन्दयामास तं नृपं स्विष्टकृत्तमः ।
अभयं च स जग्राह स्वसैन्ये वै महीपतिः ॥ ०२१ ॥

ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः ।
जिगीषन्ति बलाद्राजंस्ते दह्यन्तीह वह्निना ॥ ०२२ ॥

तस्यां पुर्यां तदा चैव माहिष्मत्यां कुरूद्वह ।
बभूवुरनभिग्राह्या योषितश्छन्दतः किल ॥ ०२३ ॥

एवमग्निर्वरं प्रादात्स्त्रीणामप्रतिवारणे ।
स्वैरिण्यस्तत्र नार्यो हि यथेष्टं प्रचरन्त्युत ॥ ०२४ ॥

वर्जयन्ति च राजानस्तद्राष्ट्रं पुरुषोत्तम ।
भयादग्नेर्महाराज तदा प्रभृति सर्वदा ॥ ०२५ ॥

सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम् ।
परीतमग्निना राजन्नाकम्पत यथा गिरिः ॥ ०२६ ॥

उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत्पावकं ततः ।
त्वदर्थोऽयं समारम्भः कृष्णवर्त्मन्नमोऽस्तु ते ॥ ०२७ ॥

मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक ।
पावनात्पावकश्चासि वहनाद्धव्यवाहनः ॥ ०२८ ॥

वेदास्त्वदर्थं जाताश्च जातवेदास्ततो ह्यसि ।
यज्ञविघ्नमिमं कर्तुं नार्हस्त्वं हव्यवाहन ॥ ०२९ ॥

एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य मेदिनीम् ।
विधिवत्पुरुषव्याघ्रः पावकं प्रत्युपाविशत् ॥ ०३० ॥

प्रमुखे सर्वसैन्यस्य भीतोद्विग्नस्य भारत ।
न चैनमत्यगाद्वह्निर्वेलामिव महोदधिः ॥ ०३१ ॥

तमभ्येत्य शनैर्वह्निरुवाच कुरुनन्दनम् ।
सहदेवं नृणां देवं सान्त्वपूर्वमिदं वचः ॥ ०३२ ॥

उत्तिष्ठोत्तिष्ठ कौरव्य जिज्ञासेयं कृता मया ।
वेद्मि सर्वमभिप्रायं तव धर्मसुतस्य च ॥ ०३३ ॥

मया तु रक्षितव्येयं पुरी भरतसत्तम ।
यावद्राज्ञोऽस्य नीलस्य कुलवंशधरा इति ॥ ०३४ ॥

ईप्सितं तु करिष्यामि मनसस्तव पाण्डव ॥ ०३४ ॥

तत उत्थाय हृष्टात्मा प्राञ्जलिः शिरसानतः ।
पूजयामास माद्रेयः पावकं पुरुषर्षभः ॥ ०३५ ॥

पावके विनिवृत्ते तु नीलो राजाभ्ययात्तदा ।
सत्कारेण नरव्याघ्रं सहदेवं युधां पतिम् ॥ ०३६ ॥

प्रतिगृह्य च तां पूजां करे च विनिवेश्य तम् ।
माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ॥ ०३७ ॥

त्रैपुरं स वशे कृत्वा राजानममितौजसम् ।
निजग्राह महाबाहुस्तरसा पोतनेश्वरम् ॥ ०३८ ॥

आहृतिं कौशिकाचार्यं यत्नेन महता ततः ।
वशे चक्रे महाबाहुः सुराष्ट्राधिपतिं तथा ॥ ०३९ ॥

सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणे ।
राज्ञे भोजकटस्थाय महामात्राय धीमते ॥ ०४० ॥

भीष्मकाय स धर्मात्मा साक्षादिन्द्रसखाय वै ।
स चास्य ससुतो राजन्प्रतिजग्राह शासनम् ॥ ०४१ ॥

प्रीतिपूर्वं महाबाहुर्वासुदेवमवेक्ष्य च ।
ततः स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ॥ ०४२ ॥

ततः शूर्पारकं चैव गणं चोपकृताह्वयम् ।
वशे चक्रे महातेजा दण्डकांश्च महाबलः ॥ ०४३ ॥

सागरद्वीपवासांश्च नृपतीन्म्लेच्छयोनिजान् ।
निषादान्पुरुषादांश्च कर्णप्रावरणानपि ॥ ०४४ ॥

ये च कालमुखा नाम नरा राक्षसयोनयः ।
कृत्स्नं कोल्लगिरिं चैव मुरचीपत्तनं तथा ॥ ०४५ ॥

द्वीपं ताम्राह्वयं चैव पर्वतं रामकं तथा ।
तिमिङ्गिलं च नृपतिं वशे चक्रे महामतिः ॥ ०४६ ॥

एकपादांश्च पुरुषान्केवलान्वनवासिनः ।
नगरीं सञ्जयन्तीं च पिच्छण्डं करहाटकम् ॥ ०४७ ॥

दूतैरेव वशे चक्रे करं चैनानदापयत् ॥ ०४७ ॥

पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः ।
अन्ध्रांस्तलवनांश्चैव कलिङ्गानोष्ट्रकर्णिकान् ॥ ०४८ ॥

अन्ताखीं चैव रोमां च यवनानां पुरं तथा ।
दूतैरेव वशे चक्रे करं चैनानदापयत् ॥ ०४९ ॥

भरुकच्छं गतो धीमान्दूतान्माद्रवतीसुतः ।

प्रेषयामास राजेन्द्र पौलस्त्याय महात्मने ॥ ०५० ॥

विभीषणाय धर्मात्मा प्रीतिपूर्वमरिंदमः ॥ ०५० ॥

स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
तच्च कालकृतं धीमानन्वमन्यत स प्रभुः ॥ ०५१ ॥

ततः संप्रेषयामास रत्नानि विविधानि च ।
चन्दनागुरुमुख्यानि दिव्यान्याभरणानि च ॥ ०५२ ॥

वासांसि च महार्हाणि मणींश्चैव महाधनान् ।
न्यवर्तत ततो धीमान्सहदेवः प्रतापवान् ॥ ०५३ ॥

एवं निर्जित्य तरसा सान्त्वेन विजयेन च ।
करदान्पार्थिवान्कृत्वा प्रत्यागच्छदरिंदमः ॥ ०५४ ॥

धर्मराजाय तत्सर्वं निवेद्य भरतर्षभ ।
कृतकर्मा सुखं राजन्नुवास जनमेजय ॥ ०५५ ॥

---

# अध्याय ०२९

वैशंपायन उवाच ॥

नकुलस्य तु वक्ष्यामि कर्माणि विजयं तथा ।
वासुदेवजितामाशां यथासौ व्यजयत्प्रभुः ॥ ००१ ॥

निर्याय खाण्डवप्रस्थात्प्रतीचीमभितो दिशम् ।
उद्दिश्य मतिमान्प्रायान्महत्या सेनया सह ॥ ००२ ॥

सिंहनादेन महता योधानां गर्जितेन च ।
रथनेमिनिनादैश्च कम्पयन्वसुधामिमाम् ॥ ००३ ॥

ततो बहुधनं रम्यं गवाश्वधनधान्यवत् ।
कार्त्तिकेयस्य दयितं रोहीतकमुपाद्रवत् ॥ ००४ ॥

तत्र युद्धं महद्वृत्तं शूरैर्मत्तमयूरकैः ।
मरुभूमिं च कार्त्स्न्येन तथैव बहुधान्यकम् ॥ ००५ ॥

शैरीषकं महेच्छं च वशे चक्रे महाद्युतिः ।
शिबींस्त्रिगर्तानम्बष्ठान्मालवान्पञ्चकर्पटान् ॥ ००६ ॥

तथा मध्यमिकायांश्च वाटधानान्द्विजानथ ।
पुनश्च परिवृत्याथ पुष्करारण्यवासिनः ॥ ००७ ॥

गणानुत्सवसङ्केतान्व्यजयत्पुरुषर्षभः ।
सिन्धुकूलाश्रिता ये च ग्रामणेया महाबलाः ॥ ००८ ॥

शूद्राभीरगणाश्चैव ये चाश्रित्य सरस्वतीम् ।
वर्तयन्ति च ये मत्स्यैर्ये च पर्वतवासिनः ॥ ००९ ॥

कृत्स्नं पञ्चनदं चैव तथैवापरपर्यटम् ।
उत्तरज्योतिकं चैव तथा वृन्दाटकं पुरम् ॥ ०१० ॥

द्वारपालं च तरसा वशे चक्रे महाद्युतिः ॥ ०१० ॥

रमठान्हारहूणांश्च प्रतीच्याश्चैव ये नृपाः ।
तान्सर्वान्स वशे चक्रे शासनादेव पाण्डवः ॥ ०११ ॥

तत्रस्थः प्रेषयामास वासुदेवाय चाभिभुः ।

स चास्य दशभी राज्यैः प्रतिजग्राह शासनम् ॥ ०१२ ॥

ततः शाकलमभ्येत्य मद्राणां पुटभेदनम् ।
मातुलं प्रीतिपूर्वेण शल्यं चक्रे वशे बली ॥ ०१३ ॥

स तस्मिन्सत्कृतो राज्ञा सत्कारार्हो विशां पते ।
रत्नानि भूरीण्यादाय संप्रतस्थे युधां पतिः ॥ ०१४ ॥

ततः सागरकुक्षिस्थान्म्लेच्छान्परमदारुणान् ।
पह्लवान्बर्बरांश्चैव तान्सर्वाननयद्वशम् ॥ ०१५ ॥

ततो रत्नान्युपादाय वशे कृत्वा च पार्थिवान् ।
न्यवर्तत नरश्रेष्ठो नकुलश्चित्रमार्गवित् ॥ ०१६ ॥

करभाणां सहस्राणि कोशं तस्य महात्मनः ।
ऊहुर्दश महाराज कृच्छ्रादिव महाधनम् ॥ ०१७ ॥

इन्द्रप्रस्थगतं वीरमभ्येत्य स युधिष्ठिरम् ।
ततो माद्रीसुतः श्रीमान्धनं तस्मै न्यवेदयत् ॥ ०१८ ॥

एवं प्रतीचीं नकुलो दिशं वरुणपालिताम् ।
विजिग्ये वासुदेवेन निर्जितां भरतर्षभः ॥ ०१९ ॥

---

# राजसूयपर्व

## अध्याय ०३०

वैशंपायन उवाच ॥

रक्षणाद्धर्मराजस्य सत्यस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव स्वकर्मनिरताः प्रजाः ॥ ००१ ॥

बलीनां सम्यगादानाद्धर्मतश्चानुशासनात् ।
निकामवर्षी पर्जन्यः स्फीतो जनपदोऽभवत् ॥ ००२ ॥

सर्वारम्भाः सुप्रवृत्ता गोरक्षं कर्षणं वणिक् ।
विशेषात्सर्वमेवैतत्सञ्जज्ञे राजकर्मणः ॥ ००३ ॥

दस्युभ्यो वञ्चकेभ्यो वा राजन्प्रति परस्परम् ।
राजवल्लभतश्चैव नाश्रूयन्त मृषा गिरः ॥ ००४ ॥

अवर्षं चातिवर्षं च व्याधिपावकमूर्छनम् ।
सर्वमेतत्तदा नासीद्धर्मनित्ये युधिष्ठिरे ॥ ००५ ॥

प्रियं कर्तुमुपस्थातुं बलिकर्म स्वभावजम् ।
अभिहर्तुं नृपा जग्मुर्नान्यैः कार्यैः पृथक्पृथक् ॥ ००६ ॥

धर्म्यैर्धनागमैस्तस्य ववृधे निचयो महान् ।
कर्तुं यस्य न शक्येत क्षयो वर्षशतैरपि ॥ ००७ ॥

स्वकोशस्य परीमाणं कोष्ठस्य च महीपतिः ।
विज्ञाय राजा कौन्तेयो यज्ञायैव मनो दधे ॥ ००८ ॥

सुहृदश्चैव तं सर्वे पृथक्च सह चाब्रुवन् ।
यज्ञकालस्तव विभो क्रियतामत्र सांप्रतम् ॥ ००९ ॥

अथैवं ब्रुवतामेव तेषामभ्याययौ हरिः ।
ऋषिः पुराणो वेदात्मा दृश्यश्चापि विजानताम् ॥ ०१० ॥

जगतस्तस्थुषां श्रेष्ठः प्रभवश्चाप्ययश्च ह ।
भूतभव्यभवन्नाथः केशवः केशिसूदनः ॥ ०११ ॥

प्राकारः सर्ववृष्णीनामापत्स्वभयदोऽरिहा ।
बलाधिकारे निक्षिप्य संहत्यानकदुन्दुभिम् ॥ ०१२ ॥

उच्चावचमुपादाय धर्मराजाय माधवः ।
धनौघं पुरुषव्याघ्रो बलेन महता वृतः ॥ ०१३ ॥

तं धनौघमपर्यन्तं रत्नसागरमक्षयम् ।
नादयन्रथघोषेण प्रविवेश पुरोत्तमम् ॥ ०१४ ॥

असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहृषे भारतं पुरम् ॥ ०१५ ॥

तं मुदाभिसमागम्य सत्कृत्य च यथाविधि ।
संपृष्ट्वा कुशलं चैव सुखासीनं युधिष्ठिरः ॥ ०१६ ॥

धौम्यद्वैपायनमुखैर्ऋत्विग्भिः पुरुषर्षभः ।
भीमार्जुनयमैश्चापि सहितः कृष्णमब्रवीत् ॥ ०१७ ॥

त्वत्कृते पृथिवी सर्वा मद्वशे कृष्ण वर्तते ।
धनं च बहु वार्ष्णेय त्वत्प्रसादादुपार्जितम् ॥ ०१८ ॥

सोऽहमिच्छामि तत्सर्वं विधिवद्देवकीसुत ।

उपयोक्तुं द्विजाग्र्येषु हव्यवाहे च माधव ॥ ०१९ ॥

तदहं यष्टुमिच्छामि दाशार्ह सहितस्त्वया ।
अनुजैश्च महाबाहो तन्मानुज्ञातुमर्हसि ॥ ०२० ॥

स दीक्षापय गोविन्द त्वमात्मानं महाभुज ।
त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम् ॥ ०२१ ॥

मां वाप्यभ्यनुजानीहि सहैभिरनुजैर्विभो ।
अनुज्ञातस्त्वया कृष्ण प्राप्नुयां क्रतुमुत्तमम् ॥ ०२२ ॥

तं कृष्णः प्रत्युवाचेदं बहूक्त्वा गुणविस्तरम् ।
त्वमेव राजशार्दूल सम्राडर्हो महाक्रतुम् ॥ ०२३ ॥

संप्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयम् ॥ ०२३ ॥

यजस्वाभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते ।
नियुङ्क्ष्व चापि मां कृत्ये सर्वं कर्तास्मि ते वचः ॥ ०२४ ॥

युधिष्ठिर उवाच ॥

सफलः कृष्ण सङ्कल्पः सिद्धिश्च नियता मम ।
यस्य मे त्वं हृषीकेश यथेप्सितमुपस्थितः ॥ ०२५ ॥

वैशंपायन उवाच ॥

अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह ।
ईहितुं राजसूयाय साधनान्युपचक्रमे ॥ ०२६ ॥

तत आज्ञापयामास पाण्डवोऽरिनिबर्हणः ।
सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्वशः ॥ ०२७ ॥

अस्मिन्क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः ।
तथोपकरणं सर्वं मङ्गलानि च सर्वशः ॥ ०२८ ॥

अधियज्ञांश्च संभारान्धौम्योक्तान्क्षिप्रमेव हि ।
समानयन्तु पुरुषा यथायोगं यथाक्रमम् ॥ ०२९ ॥

इन्द्रसेनो विशोकश्च पूरुश्चार्जुनसारथिः ।
अन्नाद्याहरणे युक्ताः सन्तु मत्प्रियकाम्यया ॥ ०३० ॥

सर्वकामाश्च कार्यन्तां रसगन्धसमन्विताः ।
मनोहराः प्रीतिकरा द्विजानां कुरुसत्तम ॥ ०३१ ॥

तद्वाक्यसमकालं तु कृतं सर्वमवेदयत् ।
सहदेवो युधां श्रेष्ठो धर्मराजे महात्मनि ॥ ०३२ ॥

ततो द्वैपायनो राजन्नृत्विजः समुपानयत् ।
वेदानिव महाभागान्साक्षान्मूर्तिमतो द्विजान् ॥ ०३३ ॥

स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः ।
धनञ्जयानामृषभः सुसामा सामगोऽभवत् ॥ ०३४ ॥

याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्युसत्तमः ।
पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत् ॥ ०३५ ॥

एतेषां शिष्यवर्गाश्च पुत्राश्च भरतर्षभ ।
बभूवुर्होत्रगाः सर्वे वेदवेदाङ्गपारगाः ॥ ०३६ ॥

ते वाचयित्वा पुण्याहमीहयित्वा च तं विधिम् ।
शास्त्रोक्तं योजयामासुस्तद्देवयजनं महत् ॥ ०३७ ॥

तत्र चक्रुरनुज्ञाताः शरणान्युत शिल्पिनः ।
रत्नवन्ति विशालानि वेश्मानीव दिवौकसाम् ॥ ०३८ ॥

तत आज्ञापयामास स राजा राजसत्तमः ।
सहदेवं तदा सद्यो मन्त्रिणं कुरुसत्तमः ॥ ०३९ ॥

आमन्त्रणार्थं दूतांस्त्वं प्रेषयस्वाशुगान्द्रुतम् ।
उपश्रुत्य वचो राज्ञः स दूतान्प्राहिणोत्तदा ॥ ०४० ॥

आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान्भूमिपानपि ।
विशश्च मान्याञ्शूद्रांश्च सर्वानानयतेति च ॥ ०४१ ॥

ते सर्वान्पृथिवीपालान्पाण्डवेयस्य शासनात् ।
आमन्त्रयां बभूवुश्च प्रेषयामास चापरान् ॥ ०४२ ॥

ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम् ।
दीक्षयां चक्रिरे विप्रा राजसूयाय भारत ॥ ०४३ ॥

दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिरः ।
जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः ॥ ०४४ ॥

भ्रातृभिर्ज्ञातिभिश्चैव सुहृद्भिः सचिवैस्तथा ।
क्षत्रियैश्च मनुष्येन्द्र नानादेशसमागतैः ॥ ०४५ ॥

अमात्यैश्च नृपश्रेष्ठो धर्मो विग्रहवानिव ॥ ०४५ ॥

आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः ।
सर्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः ॥ ०४६ ॥

तेषामावसथांश्चक्रुर्धर्मराजस्य शासनात् ।
बह्वन्नाञ्शयनैर्युक्तान्सगणानां पृथक्पृथक् ॥ ०४७ ॥

सर्वर्तुगुणसंपन्नाञ्शिल्पिनोऽथ सहस्रशः ॥ ०४७ ॥

तेषु ते न्यवसन्राजन्ब्राह्मणा भृशसत्कृताः ।
कथयन्तः कथा बह्वीः पश्यन्तो नटनर्तकान् ॥ ०४८ ॥

भुञ्जतां चैव विप्राणां वदतां च महास्वनः ।
अनिशं श्रूयते स्मात्र मुदितानां महात्मनाम् ॥ ०४९ ॥

दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवंप्रकाराः सञ्जल्पाः श्रूयन्ते स्मात्र नित्यशः ॥ ०५० ॥

गवां शतसहस्राणि शयनानां च भारत ।
रुक्मस्य योषितां चैव धर्मराजः पृथग्ददौ ॥ ०५१ ॥

प्रावर्ततैवं यज्ञः स पाण्डवस्य महात्मनः ।
पृथिव्यामेकवीरस्य शक्रस्येव त्रिविष्टपे ॥ ०५२ ॥

ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम् ।
नकुलं हास्तिनपुरं भीष्माय भरतर्षभ ॥ ०५३ ॥

द्रोणाय धृतराष्ट्राय विदुराय कृपाय च ।
भ्रातृणां चैव सर्वेषां येऽनुरक्ता युधिष्ठिरे ॥ ०५४ ॥

---

# अध्याय ०३१

वैशंपायन उवाच ॥

स गत्वा हास्तिनपुरं नकुलः समितिञ्जयः ।
भीष्ममामन्त्रयामास धृतराष्ट्रं च पाण्डवः ॥ ००१ ॥

प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरःसराः ।
संश्रुत्य धर्मराजस्य यज्ञं यज्ञविदस्तदा ॥ ००२ ॥

अन्ये च शतशस्तुष्टैर्मनोभिर्मनुजर्षभ ।
द्रष्टुकामाः सभां चैव धर्मराजं च पाण्डवम् ॥ ००३ ॥

दिग्भ्यः सर्वे समापेतुः पार्थिवास्तत्र भारत ।
समुपादाय रत्नानि विविधानि महान्ति च ॥ ००४ ॥

धृतराष्ट्रश्च भीष्मश्च विदुरश्च महामतिः ।
दुर्योधनपुरोगाश्च भ्रातरः सर्व एव ते ॥ ००५ ॥

सत्कृत्यामन्त्रिताः सर्वे आचार्यप्रमुखा नृपाः ।
गान्धारराजः सुबलः शकुनिश्च महाबलः ॥ ००६ ॥

अचलो वृषकश्चैव कर्णश्च रथिनां वरः ।
ऋतः शल्यो मद्रराजो बाह्लिकश्च महारथः ॥ ००७ ॥

सोमदत्तोऽथ कौरव्यो भूरिर्भूरिश्रवाः शलः ।
अश्वत्थामा कृपो द्रोणः सैन्धवश्च जयद्रथः ॥ ००८ ॥

यज्ञसेनः सपुत्रश्च शाल्वश्च वसुधाधिपः ।
प्राग्ज्योतिषश्च नृपतिर्भगदत्तो महायशाः ॥ ००९ ॥

सह सर्वैस्तथा म्लेच्छैः सागरानूपवासिभिः ।
पार्वतीयाश्च राजानो राजा चैव बृहद्बलः ॥ ०१० ॥

पौण्ड्रको वासुदेवश्च वङ्गः कालिङ्गकस्तथा ।

आकर्षः कुन्तलश्चैव वानवास्यान्ध्रकास्तथा ॥ ०११ ॥

द्रविडाः सिंहलाश्चैव राजा काश्मीरकस्तथा ।
कुन्तिभोजो महातेजाः सुह्मश्च सुमहाबलः ॥ ०१२ ॥

बाह्लिकाश्चापरे शूरा राजानः सर्व एव ते ।
विराटः सह पुत्रैश्च माचेल्लश्च महारथः ॥ ०१३ ॥

राजानो राजपुत्राश्च नानाजनपदेश्वराः ॥ ०१३ ॥

शिशुपालो महावीर्यः सह पुत्रेण भारत ।
आगच्छत्पाण्डवेयस्य यज्ञं सङ्ग्रामदुर्मदः ॥ ०१४ ॥

रामश्चैवानिरुद्धश्च बभ्रुश्च सहसारणः ।
गदप्रद्युम्नसाम्बाश्च चारुदेष्णश्च वीर्यवान् ॥ ०१५ ॥

उल्मुको निशठश्चैव वीरः प्राद्युम्निरेव च ।
वृष्णयो निखिलेनान्ये समाजग्मुर्महारथाः ॥ ०१६ ॥

एते चान्ये च बहवो राजानो मध्यदेशजाः ।
आजग्मुः पाण्डुपुत्रस्य राजसूयं महाक्रतुम् ॥ ०१७ ॥

ददुस्तेषामावसथान्धर्मराजस्य शासनात् ।
बहुकक्ष्यान्वितान्राजन्दीर्घिकावृक्षशोभितान् ॥ ०१८ ॥

तथा धर्मात्मजस्तेषां चक्रे पूजामनुत्तमाम् ।
सत्कृताश्च यथोद्दिष्टाञ्जग्मुरावसथान्नृपाः ॥ ०१९ ॥

कैलासशिखरप्रख्यान्मनोज्ञान्द्रव्यभूषितान् ।
सर्वतः संवृतानुच्चैः प्राकारैः सुकृतैः सितैः ॥ ०२० ॥

सुवर्णजालसंवीतान्मणिकुट्टिमशोभितान् ।
सुखारोहणसोपानान्महासनपरिच्छदान् ॥ ०२१ ॥

स्रग्दामसमवच्छन्नानुत्तमागुरुगन्धिनः ।
हंसांशुवर्णसदृशानायोजनसुदर्शनान् ॥ ०२२ ॥

असंबाधान्समद्वारान्युतानुच्चावचैर्गुणैः ।
बहुधातुपिनद्धाङ्गान्हिमवच्छिखरानिव ॥ ०२३ ॥

विश्रान्तास्ते ततोऽपश्यन्भूमिपा भूरिदक्षिणम् ।
वृतं सदस्यैर्बहुभिर्धर्मराजं युधिष्ठिरम् ॥ ०२४ ॥

तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महात्मभिः ।
भ्राजते स्म तदा राजन्नाकपृष्ठमिवामरैः ॥ ०२५ ॥

---

# अध्याय ०३२

वैशंपायन उवाच ॥

पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः ।
अभिवाद्य ततो राजन्निदं वचनमब्रवीत् ॥ ००१ ॥

भीष्मं द्रोणं कृपं द्रौणिं दुर्योधनविविंशती ॥ ००१ ॥

अस्मिन्यज्ञे भवन्तो मामनुगृह्णन्तु सर्वशः ।
इदं वः स्वमहं चैव यदिहास्ति धनं मम ॥ ००२ ॥

प्रीणयन्तु भवन्तो मां यथेष्टमनियन्त्रिताः ॥ ००२ ॥

एवमुक्त्वा स तान्सर्वान्दीक्षितः पाण्डवाग्रजः ।
युयोज ह यथायोगमधिकारेष्वनन्तरम् ॥ ००३ ॥

भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत् ।
परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान् ॥ ००४ ॥

राज्ञां तु प्रतिपूजार्थं सञ्जयं संन्ययोजयत् ।
कृताकृतपरिज्ञाने भीष्मद्रोणौ महामती ॥ ००५ ॥

हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे ।
दक्षिणानां च वै दाने कृपं राजा न्ययोजयत् ॥ ००६ ॥

तथान्यान्पुरुषव्याघ्रांस्तस्मिंस्तस्मिन्न्ययोजयत् ॥ ००६ ॥

बाह्लिको धृतराष्ट्रश्च सोमदत्तो जयद्रथः ।
नकुलेन समानीताः स्वामिवत्तत्र रेमिरे ॥ ००७ ॥

क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्वधर्मवित् ।
दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः ॥ ००८ ॥

सर्वलोकः समावृत्तः पिप्रीषुः फलमुत्तमम् ।
द्रष्टुकामः सभां चैव धर्मराजं च पाण्डवम् ॥ ००९ ॥

न कश्चिदाहरत्तत्र सहस्रावरमर्हणम् ।
रत्नैश्च बहुभिस्तत्र धर्मराजमवर्धयन् ॥ ०१० ॥

कथं नु मम कौरव्यो रत्नदानैः समाप्नुयात् ।
यज्ञमित्येव राजानः स्पर्धमाना ददुर्धनम् ॥ ०११ ॥

भवनैः सविमानाग्रैः सोदर्कैर्बलसंवृतैः ।

लोकराजविमानैश्च ब्राह्मणावसथैः सह ॥ ०१२ ॥

कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा ।
विचित्रै रत्नवद्भिश्च ऋद्ध्या परमया युतैः ॥ ०१३ ॥

राजभिश्च समावृत्तैरतीवश्रीसमृद्धिभिः ।
अशोभत सदो राजन्कौन्तेयस्य महात्मनः ॥ ०१४ ॥

ऋद्ध्या च वरुणं देवं स्पर्धमानो युधिष्ठिरः ।
षडग्निनाथ यज्ञेन सोऽयजद्दक्षिणावता ॥ ०१५ ॥

सर्वाञ्जनान्सर्वकामैः समृद्धैः समतर्पयत् ॥ ०१५ ॥

अन्नवान्बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ।
रत्नोपहारकर्मण्यो बभूव स समागमः ॥ ०१६ ॥

इडाज्यहोमाहुतिभिर्मन्त्रशिक्षासमन्वितैः ।
तस्मिन्हि ततृपुर्देवास्तते यज्ञे महर्षिभिः ॥ ०१७ ॥

यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः ।
ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदान्विताः ॥ ०१८ ॥

---

# अर्घाभिहरणपर्व

## अध्याय ०३३

वैशंपायन उवाच ॥

ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।
अन्तर्वेदीं प्रविविशुः सत्कारार्थं महर्षयः ॥ ००१ ॥

नारदप्रमुखास्तस्यामन्तर्वेद्यां महात्मनः ।
समासीनाः शुशुभिरे सह राजर्षिभिस्तदा ॥ ००२ ॥

समेता ब्रह्मभवने देवा देवर्षयो यथा ।
कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ॥ ००३ ॥

इदमेवं न चाप्येवमेवमेतन्न चान्यथा ।
इत्यूचुर्बहवस्तत्र वितण्डानाः परस्परम् ॥ ००४ ॥

कृशानर्थांस्तथा केचिदकृशांस्तत्र कुर्वते ।
अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चितैः ॥ ००५ ॥

तत्र मेधाविनः केचिदर्थमन्यैः प्रपूरितम् ।
विचिक्षिपुर्यथा श्येना नभोगतमिवामिषम् ॥ ००६ ॥

केचिद्धर्मार्थसंयुक्ताः कथास्तत्र महाव्रताः ।
रेमिरे कथयन्तश्च सर्ववेदविदां वराः ॥ ००७ ॥

सा वेदिर्वेदसंपन्नैर्देवद्विजमहर्षिभिः ।
आबभासे समाकीर्णा नक्षत्रैर्द्यौरिवामला ॥ ००८ ॥

न तस्यां संनिधौ शूद्रः कश्चिदासीन्न चाव्रतः ।
अन्तर्वेद्यां तदा राजन्युधिष्ठिरनिवेशने ॥ ००९ ॥

तां तु लक्ष्मीवतो लक्ष्मीं तदा यज्ञविधानजाम् ।
तुतोष नारदः पश्यन्धर्मराजस्य धीमतः ॥ ०१० ॥

अथ चिन्तां समापेदे स मुनिर्मनुजाधिप ।
नारदस्तं तदा पश्यन्सर्वक्षत्रसमागमम् ॥ ०११ ॥

सस्मार च पुरावृत्तां कथां तां भरतर्षभ ।
अंशावतरणे यासौ ब्रह्मणो भवनेऽभवत् ॥ ०१२ ॥

देवानां सङ्गमं तं तु विज्ञाय कुरुनन्दन ।
नारदः पुण्डरीकाक्षं सस्मार मनसा हरिम् ॥ ०१३ ॥

साक्षात्स विबुधारिघ्नः क्षत्रे नारायणो विभुः ।
प्रतिज्ञां पालयन्धीमाञ्जातः परपुरञ्जयः ॥ ०१४ ॥

संदिदेश पुरा योऽसौ विबुधान्भूतकृत्स्वयम् ।
अन्योन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ ॥ ०१५ ॥

इति नारायणः शंभुर्भगवाञ्जगतः प्रभुः ।
आदिश्य विबुधान्सर्वानजायत यदुक्षये ॥ ०१६ ॥

क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः ।
परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् ॥ ०१७ ॥

यस्य बाहुबलं सेन्द्राः सुराः सर्व उपासते ।
सोऽयं मानुषवन्नाम हरिरास्तेऽरिमर्दनः ॥ ०१८ ॥

अहो बत महद्भूतं स्वयंभूर्यदिदं स्वयम् ।
आदास्यति पुनः क्षत्रमेवं बलसमन्वितम् ॥ ०१९ ॥

इत्येतां नारदश्चिन्तां चिन्तयामास धर्मवित् ।
हरिं नारायणं ज्ञात्वा यज्ञैरीड्यं तमीश्वरम् ॥ ०२० ॥

तस्मिन्धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः ।

महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः ॥ ०२१ ॥

ततो भीष्मोऽब्रवीद्राजन्धर्मराजं युधिष्ठिरम् ।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥ ०२२ ॥

आचार्यमृत्विजं चैव संयुक्तं च युधिष्ठिर ।
स्नातकं च प्रियं चाहुः षडर्घ्यार्हान्नृपं तथा ॥ ०२३ ॥

एतानर्हानभिगतानाहुः संवत्सरोषितान् ।
त इमे कालपूगस्य महतोऽस्मानुपागताः ॥ ०२४ ॥

एषामेकैकशो राजन्नर्घ्यमानीयतामिति ।
अथ चैषां वरिष्ठाय समर्थायोपनीयताम् ॥ ०२५ ॥

युधिष्ठिर उवाच ॥

कस्मै भवान्मन्यतेऽर्घमेकस्मै कुरुनन्दन ।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥ ०२६ ॥

वैशंपायन उवाच ॥

ततो भीष्मः शांतनवो बुद्ध्या निश्चित्य भारत ।
वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि ॥ ०२७ ॥

एष ह्येषां समेतानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ॥ ०२८ ॥

असूर्यमिव सूर्येण निवातमिव वायुना ।
भासितं ह्लादितं चैव कृष्णेनेदं सदो हि नः ॥ ०२९ ॥

तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् ।

उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घ्यमुत्तमम् ॥ ०३० ॥

प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्मणा ।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ ०३१ ॥

स उपालभ्य भीष्मं च धर्मराजं च संसदि ।
अपाक्षिपद्वासुदेवं चेदिराजो महाबलः ॥ ०३२ ॥

---

# अध्याय ०३४

शिशुपाल उवाच ॥

नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य राजवत्पार्थिवार्हणम् ॥ ००१ ॥

नायं युक्तः समाचारः पाण्डवेषु महात्मसु ।
यत्कामात्पुण्डरीकाक्षं पाण्डवार्चितवानसि ॥ ००२ ॥

बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ।
अयं तत्राभ्यतिक्रान्त आपगेयोऽल्पदर्शनः ॥ ००३ ॥

त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।
भवत्यभ्यधिकं भीष्मो लोकेष्ववमतः सताम् ॥ ००४ ॥

कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।
अर्हणामर्हति तथा यथा युष्माभिरर्चितः ॥ ००५ ॥

अथ वा मन्यसे कृष्णं स्थविरं भरतर्षभ ।

वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ॥ ००६ ॥

अथ वा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान् ।
द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनम् ॥ ००७ ॥

आचार्यं मन्यसे कृष्णमथ वा कुरुपुङ्गव ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥ ००८ ॥

ऋत्विजं मन्यसे कृष्णमथ वा कुरुनन्दन ।
द्वैपायने स्थिते विप्रे कथं कृष्णोऽर्चितस्त्वया ॥ ००९ ॥

नैव ऋत्विङ्ग चाचार्यो न राजा मधुसूदनः ।
अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ॥ ०१० ॥

अथ वाप्यर्चनीयोऽयं युष्माकं मधुसूदनः ।
किं राजभिरिहानीतैरवमानाय भारत ॥ ०११ ॥

वयं तु न भयादस्य कौन्तेयस्य महात्मनः ।
प्रयच्छामः करान्सर्वे न लोभान्न च सान्त्वनात् ॥ ०१२ ॥

अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते ॥ ०१३ ॥

किमन्यदवमानाद्धि यदिमं राजसंसदि ।
अप्राप्तलक्षणं कृष्णमर्घ्येणार्चितवानसि ॥ ०१४ ॥

अकस्माद्धर्मपुत्रस्य धर्मात्मेति यशो गतम् ।
को हि धर्मच्युते पूजामेवं युक्तां प्रयोजयेत् ॥ ०१५ ॥

योऽयं वृष्णिकुले जातो राजानं हतवान्पुरा ॥ ०१५ ॥

अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात् ।
कृपणत्वं निविष्टं च कृष्णेऽर्घ्यस्य निवेदनात् ॥ ०१६ ॥

यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः ।
ननु त्वयापि बोद्धव्यं यां पूजां माधवोऽर्हति ॥ ०१७ ॥

अथ वा कृपणैरेतामुपनीतां जनार्दन ।
पूजामनर्हः कस्मात्त्वमभ्यनुज्ञातवानसि ॥ ०१८ ॥

अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे ।
हविषः प्राप्य निष्यन्दं प्राशितुं श्वेव निर्जने ॥ ०१९ ॥

न त्वयं पार्थिवेन्द्राणामवमानः प्रयुज्यते ।
त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन ॥ ०२० ॥

क्लीबे दारक्रिया यादृगन्धे वा रूपदर्शनम् ।
अराज्ञो राजवत्पूजा तथा ते मधुसूदन ॥ ०२१ ॥

दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् ॥ ०२२ ॥

इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात् ।
निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा ॥ ०२३ ॥

---

# अध्याय ०३५

वैशंपायन उवाच ॥

ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ।
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः ॥ ००१ ॥

नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् ।
अधर्मश्च परो राजन्पारुष्यं च निरर्थकम् ॥ ००२ ॥

न हि धर्मं परं जातु नावबुध्येत पार्थिव ।
भीष्मः शांतनवस्त्वेनं मावमंस्था अतोऽन्यथा ॥ ००३ ॥

पश्य चेमान्महीपालांस्त्वत्तो वृद्धतमान्बहून् ।
मृष्यन्ते चार्हणां कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ॥ ००४ ॥

वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम् ।
न ह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ॥ ००५ ॥

भीष्म उवाच ॥

नास्मा अनुनयो देयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नानुमन्यते ॥ ००६ ॥

क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः ।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥ ००७ ॥

अस्यां च समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥ ००८ ॥

न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ।
त्रयाणामपि लोकानामर्चनीयो जनार्दनः ॥ ००९ ॥

कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः ।

जगत्सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥ ०१० ॥

तस्मात्सत्स्वपि वृद्धेषु कृष्णमर्चाम नेतरान् ।
एवं वक्तुं न चार्हस्त्वं मा भूत्ते बुद्धिरीदृशी ॥ ०११ ॥

ज्ञानवृद्धा मया राजन्बहवः पर्युपासिताः ।
तेषां कथयतां शौरेरहं गुणवतो गुणान् ॥ ०१२ ॥

समागतानामश्रौषं बहून्बहुमतान्सताम् ॥ ०१२ ॥

कर्माण्यपि च यान्यस्य जन्मप्रभृति धीमतः ।
बहुशः कथ्यमानानि नरैर्भूयः श्रुतानि मे ॥ ०१३ ॥

न केवलं वयं कामाच्चेदिराज जनार्दनम् ।
न संबन्धं पुरस्कृत्य कृतार्थं वा कथञ्चन ॥ ०१४ ॥

अर्चामहेऽर्चितं सद्भिर्भुवि भौमसुखावहम् ।
यशः शौर्यं जयं चास्य विज्ञायार्चां प्रयुज्महे ॥ ०१५ ॥

न हि कश्चिदिहास्माभिः सुबालोऽप्यपरीक्षितः ।
गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः ॥ ०१६ ॥

ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ।
पूज्ये ताविह गोविन्दे हेतू द्वावपि संस्थितौ ॥ ०१७ ॥

वेदवेदाङ्गविज्ञानं बलं चाप्यमितं तथा ।
नृणां हि लोके कस्यास्ति विशिष्टं केशवादृते ॥ ०१८ ॥

दानं दाक्ष्यं श्रुतं शौर्यं ह्रीः कीर्तिर्बुद्धिरुत्तमा ।
संनतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताच्युते ॥ ०१९ ॥

तमिमं सर्वसंपन्नमाचार्यं पितरं गुरुम् ।
अर्च्यमर्चितमर्चार्हं सर्वे संमन्तुमर्हथ ॥ ०२० ॥

ऋत्विग्गुरुर्विवाह्यश्च स्नातको नृपतिः प्रियः ।
सर्वमेतद्धृषीकेशे तस्मादभ्यर्चितोऽच्युतः ॥ ०२१ ॥

कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते भूतमिदं विश्वं समर्पितम् ॥ ०२२ ॥

एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः ।
परश्च सर्वभूतेभ्यस्तस्माद्वृद्धतमोऽच्युतः ॥ ०२३ ॥

बुद्धिर्मनो महान्वायुस्तेजोऽम्भः खं मही च या ।
चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥ ०२४ ॥

आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये ।
दिशश्चोपदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥ ०२५ ॥

अयं तु पुरुषो बालः शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥ ०२६ ॥

यो हि धर्मं विचिनुयादुत्कृष्टं मतिमान्नरः ।
स वै पश्येद्यथाधर्मं न तथा चेदिराडयम् ॥ ०२७ ॥

सवृद्धबालेष्वथ वा पार्थिवेषु महात्मसु ।
को नार्हं मन्यते कृष्णं को वाप्येनं न पूजयेत् ॥ ०२८ ॥

अथेमां दुष्कृतां पूजां शिशुपालो व्यवस्यति ।
दुष्कृतायां यथान्यायं तथायं कर्तुमर्हति ॥ ०२९ ॥

# अध्याय ०३६

वैशंपायन उवाच ॥

एवमुक्त्वा ततो भीष्मो विरराम महायशाः ।
व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः ॥ ००१ ॥

केशवं केशिहन्तारमप्रमेयपराक्रमम् ।
पूज्यमानं मया यो वः कृष्णं न सहते नृपाः ॥ ००२ ॥

सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम् ।
एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः ॥ ००३ ॥

मतिमन्तस्तु ये केचिदाचार्यं पितरं गुरुम् ।
अर्च्यमर्चितमर्चार्हमनुजानन्तु ते नृपाः ॥ ००४ ॥

ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ।
मानिनां बलिनां राज्ञां मध्ये संदर्शिते पदे ॥ ००५ ॥

ततोऽपतत्पुष्पवृष्टिः सहदेवस्य मूर्धनि ।
अदृश्यरूपा वाचश्चाप्यब्रुवन्साधु साध्विति ॥ ००६ ॥

आविध्यदजिनं कृष्णं भविष्यद्भूतजल्पकः ।
सर्वसंशयनिर्मोक्ता नारदः सर्वलोकवित् ॥ ००७ ॥

तत्राहूतागताः सर्वे सुनीथप्रमुखा गणाः ।
संप्रादृश्यन्त सङ्क्रुद्धा विवर्णवदनास्तथा ॥ ००८ ॥

युधिष्ठिराभिषेकं च वासुदेवस्य चार्हणम् ।
अब्रुवंस्तत्र राजानो निर्वेदादात्मनिश्चयात् ॥ ००९ ॥

सुहृद्भिर्वार्यमाणानां तेषां हि वपुराबभौ ।
आमिषादपकृष्टानां सिंहानामिव गर्जताम् ॥ ०१० ॥

तं बलौघमपर्यन्तं राजसागरमक्षयम् ।
कुर्वाणं समयं कृष्णो युद्धाय बुबुधे तदा ॥ ०११ ॥

पूजयित्वा तु पूजार्हं ब्रह्मक्षत्रं विशेषतः ।
सहदेवो नृणां देवः समापयत कर्म तत् ॥ ०१२ ॥

तस्मिन्नभ्यर्चिते कृष्णे सुनीथः शत्रुकर्षणः ।
अतिताम्रेक्षणः कोपादुवाच मनुजाधिपान् ॥ ०१३ ॥

स्थितः सेनापतिर्वोऽहं मन्यध्वं किं नु सांप्रतम् ।
युधि तिष्ठाम संनह्य समेतान्वृष्णिपाण्डवान् ॥ ०१४ ॥

इति सर्वान्समुत्साह्य राज्ञस्तांश्चेदिपुङ्गवः ।
यज्ञोपघाताय ततः सोऽमन्त्रयत राजभिः ॥ ०१५ ॥

---

# शिशुपालवधपर्व

## अध्याय ०३७

वैशंपायन उवाच ॥

ततः सागरसङ्काशं दृष्ट्वा नृपतिसागरम् ।
रोषात्प्रचलितं सर्वमिदमाह युधिष्ठिरः ॥ ००१ ॥

भीष्मं मतिमतां श्रेष्ठं वृद्धं कुरुपितामहम् ।
बृहस्पतिं बृहत्तेजाः पुरुहूत इवारिहा ॥ ००२ ॥

असौ रोषात्प्रचलितो महान्नृपतिसागरः ।
अत्र यत्प्रतिपत्तव्यं तन्मे ब्रूहि पितामह ॥ ००३ ॥

यज्ञस्य च न विघ्नः स्यात्प्रजानां च शिवं भवेत् ।
यथा सर्वत्र तत्सर्वं ब्रूहि मेऽद्य पितामह ॥ ००४ ॥

इत्युक्तवति धर्मज्ञे धर्मराजे युधिष्ठिरे ।
उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ॥ ००५ ॥

मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति ।
शिवः पन्थाः सुनीतोऽत्र मया पूर्वतरं वृतः ॥ ००६ ॥

प्रसुप्ते हि यथा सिंहे श्वानस्तत्र समागताः ।
भषेयुः सहिताः सर्वे तथेमे वसुधाधिपाः ॥ ००७ ॥

वृष्णिसिंहस्य सुप्तस्य तथेमे प्रमुखे स्थिताः ।
भषन्ते तात सङ्क्रुद्धाः श्वानः सिंहस्य संनिधौ ॥ ००८ ॥

न हि संबुध्यते तावत्सुप्तः सिंह इवाच्युतः ।
तेन सिंहीकरोत्येतान्नृसिंहश्चेदिपुङ्गवः ॥ ००९ ॥

पार्थिवान्पार्थिवश्रेष्ठ शिशुपालोऽल्पचेतनः ।
सर्वान्सर्वात्मना तात नेतुकामो यमक्षयम् ॥ ०१० ॥

नूनमेतत्समादातुं पुनरिच्छत्यधोक्षजः ।
यदस्य शिशुपालस्थं तेजस्तिष्ठति भारत ॥ ०११ ॥

विप्लुता चास्य भद्रं ते बुद्धिर्बुद्धिमतां वर ।
चेदिराजस्य कौन्तेय सर्वेषां च महीक्षिताम् ॥ ०१२ ॥

आदातुं हि नरव्याघ्रो यं यमिच्छत्ययं यदा ।
तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा ॥ ०१३ ॥

चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः ।
प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिर ॥ ०१४ ॥

इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः ।
भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत ॥ ०१५ ॥

---

# अध्याय ०३८

शिशुपाल उवाच ॥

विभीषिकाभिर्बह्वीभिर्भीषयन्सर्वपार्थिवान् ।
न व्यपत्रपसे कस्माद्वृद्धः सन्कुलपांसनः ॥ ००१ ॥

युक्तमेतत्तृतीयायां प्रकृतौ वर्तता त्वया ।
वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तमः ॥ ००२ ॥

नावि नौरिव संबद्धा यथान्धो वान्धमन्वियात् ।
तथाभूता हि कौरव्या भीष्म येषां त्वमग्रणीः ॥ ००३ ॥

पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः ।
त्वया कीर्तयतास्माकं भूयः प्रच्यावितं मनः ॥ ००४ ॥

अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः ।
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ॥ ००५ ॥

यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः ।
तमिमं ज्ञानवृद्धः सन्गोपं संस्तोतुमिच्छसि ॥ ००६ ॥

यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किम् ।
तौ वाश्ववृषभौ भीष्म यौ न युद्धविशारदौ ॥ ००७ ॥

चेतनारहितं काष्ठं यद्यनेन निपातितम् ।
पादेन शकटं भीष्म तत्र किं कृतमद्भुतम् ॥ ००८ ॥

वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः ।
तदा गोवर्धनो भीष्म न तच्चित्रं मतं मम ॥ ००९ ॥

भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्धनि ।
इति ते भीष्म शृण्वानाः परं विस्मयमागताः ॥ ०१० ॥

यस्य चानेन धर्मज्ञ भुक्तमन्नं बलीयसः ।
स चानेन हतः कंस इत्येतन्न महाद्भुतम् ॥ ०११ ॥

न ते श्रुतमिदं भीष्म नूनं कथयतां सताम् ।
यद्वक्ष्ये त्वामधर्मज्ञ वाक्यं कुरुकुलाधम ॥ ०१२ ॥

स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु च ।
यस्य चान्नानि भुञ्जीत यश्च स्याच्छरणागतः ॥ ०१३ ॥

इति सन्तोऽनुशासन्ति सज्जना धर्मिणः सदा ।
भीष्म लोके हि तत्सर्वं वितथं त्वयि दृश्यते ॥ ०१४ ॥

ज्ञानवृद्धं च वृद्धं च भूयांसं केशवं मम ।
अजानत इवाख्यासि संस्तुवन्कुरुसत्तम ॥ ०१५ ॥

गोघ्नः स्त्रीघ्नश्च सन्भीष्म कथं संस्तवमर्हति ॥ ०१५ ॥

असौ मतिमतां श्रेष्ठो य एष जगतः प्रभुः ।
संभावयति यद्येवं त्वद्वाक्याच्च जनार्दनः ॥ ०१६ ॥

एवमेतत्सर्वमिति सर्वं तद्वितथं ध्रुवम् ॥ ०१६ ॥

न गाथा गाथिनं शास्ति बहु चेदपि गायति ।
प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा ॥ ०१७ ॥

नूनं प्रकृतिरेषा ते जघन्या नात्र संशयः ।
अतः पापीयसी चैषां पाण्डवानामपीष्यते ॥ ०१८ ॥

येषामर्च्यतमः कृष्णस्त्वं च येषां प्रदर्शकः ।
धर्मवात्त्वमधर्मज्ञः सतां मार्गादवप्लुतः ॥ ०१९ ॥

को हि धर्मिणमात्मानं जानञ्ज्ञानवतां वरः ।
कुर्याद्यथा त्वया भीष्म कृतं धर्ममवेक्षता ॥ ०२० ॥

अन्यकामा हि धर्मज्ञ कन्यका प्राज्ञमानिना ।
अम्बा नामेति भद्रं ते कथं सापहृता त्वया ॥ ०२१ ॥

यां त्वयापहृतां भीष्म कन्यां नैषितवान्नृपः ।
भ्राता विचित्रवीर्यस्ते सतां वृत्तमनुष्ठितः ॥ ०२२ ॥

दारयोर्यस्य चान्येन मिषतः प्राज्ञमानिनः ।
तव जातान्यपत्यानि सज्जनाचरिते पथि ॥ ०२३ ॥

न हि धर्मोऽस्ति ते भीष्म ब्रह्मचर्यमिदं वृथा ।
यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः ॥ ०२४ ॥

न त्वहं तव धर्मज्ञ पश्याम्युपचयं क्वचित् ।
न हि ते सेविता वृद्धा य एवं धर्ममब्रुवन् ॥ ०२५ ॥

इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
सर्वमेतदपत्यस्य कलां नार्हति षोडशीम् ॥ ०२६ ॥

व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत् ।
सर्वं तदनपत्यस्य मोघं भवति निश्चयात् ॥ ०२७ ॥

सोऽनपत्यश्च वृद्धश्च मिथ्याधर्मानुशासनात् ।
हंसवत्त्वमपीदानीं ज्ञातिभ्यः प्राप्नुया वधम् ॥ ०२८ ॥

एवं हि कथयन्त्यन्ये नरा ज्ञानविदः पुरा ।
भीष्म यत्तदहं सम्यग्वक्ष्यामि तव शृण्वतः ॥ ०२९ ॥

वृद्धः किल समुद्रान्ते कश्चिद्धंसोऽभवत्पुरा ।
धर्मवागन्यथावृत्तः पक्षिणः सोऽनुशास्ति ह ॥ ०३० ॥

धर्मं चरत माधर्ममिति तस्य वचः किल ।
पक्षिणः शुश्रुवुर्भीष्म सततं धर्मवादिनः ॥ ०३१ ॥

अथास्य भक्ष्यमाजह्रुः समुद्रजलचारिणः ।
अण्डजा भीष्म तस्यान्ये धर्मार्थमिति शुश्रुम ॥ ०३२ ॥

तस्य चैव समभ्याशे निक्षिप्याण्डानि सर्वशः ।

समुद्राम्भस्यमोदन्त चरन्तो भीष्म पक्षिणः ॥ ०३३ ॥

तेषामण्डानि सर्वेषां भक्षयामास पापकृत् ।
स हंसः संप्रमत्तानामप्रमत्तः स्वकर्मणि ॥ ०३४ ॥

ततः प्रक्षीयमाणेषु तेष्वण्डेष्वण्डजोऽपरः ।
अशङ्कत महाप्राज्ञस्तं कदाचिद्ददर्श ह ॥ ०३५ ॥

ततः स कथयामास दृष्ट्वा हंसस्य किल्बिषम् ।
तेषां परमदुःखार्तः स पक्षी सर्वपक्षिणाम् ॥ ०३६ ॥

ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समागताः ।
निजघ्नुस्तं तदा हंसं मिथ्यावृत्तं कुरूद्वह ॥ ०३७ ॥

ते त्वां हंससधर्माणमपीमे वसुधाधिपाः ।
निहन्युर्भीष्म सङ्क्रुद्धाः पक्षिणस्तमिवाण्डजम् ॥ ०३८ ॥

गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
भीष्म यां तां च ते सम्यक्कथयिष्यामि भारत ॥ ०३९ ॥

अन्तरात्मनि विनिहिते ; रौषि पत्ररथ वितथम् ।
अण्डभक्षणमशुचि ते ; कर्म वाचमतिशयते ॥ ०४० ॥

---

# अध्याय ०३९

शिशुपाल उवाच ॥

स मे बहुमतो राजा जरासंधो महाबलः ।

योऽनेन युद्धं नेयेष दासोऽयमिति संयुगे ॥ ००१ ॥

केशवेन कृतं यत्तु जरासंधवधे तदा ।
भीमसेनार्जुनाभ्यां च कस्तत्साध्विति मन्यते ॥ ००२ ॥

अद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना ।
दृष्टः प्रभावः कृष्णेन जरासंधस्य धीमतः ॥ ००३ ॥

येन धर्मात्मनात्मानं ब्रह्मण्यमभिजानता ।
नैषितं पाद्यमस्मै तद्दातुमग्रे दुरात्मने ॥ ००४ ॥

भुज्यतामिति तेनोक्ताः कृष्णभीमधनञ्जयाः ।
जरासंधेन कौरव्य कृष्णेन विकृतं कृतम् ॥ ००५ ॥

यद्ययं जगतः कर्ता यथैनं मूर्ख मन्यसे ।
कस्मान्न ब्राह्मणं सम्यगात्मानमवगच्छति ॥ ००६ ॥

इदं त्वाश्चर्यभूतं मे यदिमे पाण्डवास्त्वया ।
अपकृष्टाः सतां मार्गान्मन्यन्ते तच्च साध्विति ॥ ००७ ॥

अथ वा नैतदाश्चर्यं येषां त्वमसि भारत ।
स्त्रीसधर्मा च वृद्धश्च सर्वार्थानां प्रदर्शकः ॥ ००८ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु ।
चुकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान् ॥ ००९ ॥

तस्य पद्मप्रतीकाशे स्वभावायतविस्तृते ।
भूयः क्रोधाभिताम्रान्ते रक्ते नेत्रे बभूवतुः ॥ ०१० ॥

त्रिशिखां भ्रुकुटीं चास्य ददृशुः सर्वपार्थिवाः ।
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ॥ ०११ ॥

दन्तान्संदशतस्तस्य कोपाद्ददृशुराननम् ।
युगान्ते सर्वभूतानि कालस्येव दिधक्षतः ॥ ०१२ ॥

उत्पतन्तं तु वेगेन जग्राहैनं मनस्विनम् ।
भीष्म एव महाबाहुर्महासेनमिवेश्वरः ॥ ०१३ ॥

तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत ।
गुरुणा विविधैर्वाक्यैः क्रोधः प्रशममागतः ॥ ०१४ ॥

नातिचक्राम भीष्मस्य स हि वाक्यमरिंदमः ।
समुद्धूतो घनापाये वेलामिव महोदधिः ॥ ०१५ ॥

शिशुपालस्तु सङ्क्रुद्धे भीमसेने नराधिप ।
नाकम्पत तदा वीरः पौरुषे स्वे व्यवस्थितः ॥ ०१६ ॥

उत्पतन्तं तु वेगेन पुनः पुनररिंदमः ।
न स तं चिन्तयामास सिंहः क्षुद्रमृगं यथा ॥ ०१७ ॥

प्रहसंश्चाब्रवीद्वाक्यं चेदिराजः प्रतापवान् ।
भीमसेनमतिक्रुद्धं दृष्ट्वा भीमपराक्रमम् ॥ ०१८ ॥

मुञ्चैनं भीष्म पश्यन्तु यावदेनं नराधिपाः ।
मत्प्रतापाग्निनिर्दग्धं पतङ्गमिव वह्निना ॥ ०१९ ॥

ततश्चेदिपतेर्वाक्यं तच्छ्रुत्वा कुरुसत्तमः ।
भीमसेनमुवाचेदं भीष्मो मतिमतां वरः ॥ ०२० ॥

# अध्याय ०४०

भीष्म उवाच ॥

चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः ।
रासभारावसदृशं रुराव च ननाद च ॥ ००१ ॥

तेनास्य मातापितरौ त्रेसतुस्तौ सबान्धवौ ।
वैकृतं तच्च तौ दृष्ट्वा त्यागाय कुरुतां मतिम् ॥ ००२ ॥

ततः सभार्यं नृपतिं सामात्यं सपुरोहितम् ।
चिन्तासंमूढहृदयं वागुवाचाशरीरिणी ॥ ००३ ॥

एष ते नृपते पुत्रः श्रीमाञ्जातो महाबलः ।
तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुम् ॥ ००४ ॥

न चैवैतस्य मृत्युस्त्वं न कालः प्रत्युपस्थितः ।
मृत्युर्हन्तास्य शस्त्रेण स चोत्पन्नो नराधिप ॥ ००५ ॥

संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः ।
पुत्रस्नेहाभिसंतप्ता जननी वाक्यमब्रवीत् ॥ ००६ ॥

येनेदमीरितं वाक्यं ममैव तनयं प्रति ।
प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ॥ ००७ ॥

श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति ।
अन्तर्हितं ततो भूतमुवाचेदं पुनर्वचः ॥ ००८ ॥

येनोत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ ।

पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ ॥ ००९ ॥

तृतीयमेतद्बालस्य ललाटस्थं च लोचनम् ।
निमज्जिष्यति यं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति ॥ ०१० ॥

त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतम् ।
धरण्यां पार्थिवाः सर्वे अभ्यगच्छन्दिदृक्षवः ॥ ०११ ॥

तान्पूजयित्वा संप्राप्तान्यथार्हं स महीपतिः ।
एकैकस्य नृपस्याङ्के पुत्रमारोपयत्तदा ॥ ०१२ ॥

एवं राजसहस्राणां पृथक्त्वेन यथाक्रमम् ।
शिशुरङ्के समारूढो न तत्प्राप निदर्शनम् ॥ ०१३ ॥

ततश्चेदिपुरं प्राप्तौ सङ्कर्षणजनार्दनौ ।
यादवौ यादवीं द्रष्टुं स्वसारं तां पितुस्तदा ॥ ०१४ ॥

अभिवाद्य यथान्यायं यथाज्येष्ठं नृपांश्च तान् ।
कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ ॥ ०१५ ॥

अभ्यर्चितौ तदा वीरौ प्रीत्या चाभ्यधिकं ततः ।
पुत्रं दामोदरोत्सङ्गे देवी संन्यदधात्स्वयम् ॥ ०१६ ॥

न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ ।
पेततुस्तच्च नयनं निममज्ज ललाटजम् ॥ ०१७ ॥

तद्दृष्ट्वा व्यथिता त्रस्ता वरं कृष्णमयाचत ।
ददस्व मे वरं कृष्ण भयार्ताया महाभुज ॥ ०१८ ॥

त्वं ह्यार्तानां समाश्वासो भीतानामभयङ्करः ।
पितृष्वसारं मा भैषीरित्युवाच जनार्दनः ॥ ०१९ ॥

ददानि कं वरं किं वा करवाणि पितृष्वसः ।
शक्यं वा यदि वाशक्यं करिष्यामि वचस्तव ॥ ०२० ॥

एवमुक्ता ततः कृष्णमब्रवीद्यदुनन्दनम् ।
शिशुपालस्यापराधान्क्षमेथास्त्वं महाबल ॥ ०२१ ॥

कृष्ण उवाच ॥

अपराधशतं क्षाम्यं मया ह्यस्य पितृष्वसः ।
पुत्रस्य ते वधार्हाणां मा त्वं शोके मनः कृथाः ॥ ०२२ ॥

भीष्म उवाच ॥

एवमेष नृपः पापः शिशुपालः सुमन्दधीः ।
त्वां समाह्वयते वीर गोविन्दवरदर्पितः ॥ ०२३ ॥

---

# अध्याय ०४१

भीष्म उवाच ॥

नैषा चेदिपतेर्बुद्धिर्यया त्वाह्वयतेऽच्युतम् ।
नूनमेष जगद्भर्तुः कृष्णस्यैव विनिश्चयः ॥ ००१ ॥

को हि मां भीमसेनाद्य क्षितावर्हति पार्थिवः ।
क्षेप्तुं दैवपरीतात्मा यथैष कुलपांसनः ॥ ००२ ॥

एष ह्यस्य महाबाहो तेजोंशश्च हरेर्ध्रुवम् ।

तमेव पुनरादातुमिच्छत्पृथुयशा हरिः ॥ ००३ ॥

येनैष कुरुशार्दूल शार्दूल इव चेदिराट् ।
गर्जत्यतीव दुर्बुद्धिः सर्वानस्मानचिन्तयन् ॥ ००४ ॥

वैशंपायन उवाच ॥

ततो न ममृषे चैद्यस्तद्भीष्मवचनं तदा ।
उवाच चैनं सङ्क्रुद्धः पुनर्भीष्ममथोत्तरम् ॥ ००५ ॥

शिशुपाल उवाच ॥

द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः ।
यस्य संस्तववक्ता त्वं बन्दिवत्सततोत्थितः ॥ ००६ ॥

संस्तवाय मनो भीष्म परेषां रमते सदा ।
यदि संस्तौषि राज्ञस्त्वमिमं हित्वा जनार्दनम् ॥ ००७ ॥

दरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तमम् ।
जायमानेन येनेयमभवद्दारिता मही ॥ ००८ ॥

वङ्गाङ्गविषयाध्यक्षं सहस्राक्षसमं बले ।
स्तुहि कर्णमिमं भीष्म महाचापविकर्षणम् ॥ ००९ ॥

द्रोणं द्रौणिं च साधु त्वं पितापुत्रौ महारथौ ।
स्तुहि स्तुत्याविमौ भीष्म सततं द्विजसत्तमौ ॥ ०१० ॥

ययोरन्यतरो भीष्म सङ्क्रुद्धः सचराचराम् ।
इमां वसुमतीं कुर्यादशेषामिति मे मतिः ॥ ०११ ॥

द्रोणस्य हि समं युद्धे न पश्यामि नराधिपम् ।

अश्वत्थाम्नस्तथा भीष्म न चैतौ स्तोतुमिच्छसि ॥ ०१२ ॥

शल्यादीनपि कस्मात्त्वं न स्तौषि वसुधाधिपान् ।
स्तवाय यदि ते बुद्धिर्वर्तते भीष्म सर्वदा ॥ ०१३ ॥

किं हि शक्यं मया कर्तुं यद्वृद्धानां त्वया नृप ।
पुरा कथयतां नूनं न श्रुतं धर्मवादिनाम् ॥ ०१४ ॥

आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ॥ ०१५ ॥

यदस्तव्यमिमं शश्वन्मोहात्संस्तौषि भक्तितः ।
केशवं तच्च ते भीष्म न कश्चिदनुमन्यते ॥ ०१६ ॥

कथं भोजस्य पुरुषे वर्गपाले दुरात्मनि ।
समावेशयसे सर्वं जगत्केवलकाम्यया ॥ ०१७ ॥

अथ वैषा न ते भक्तिः पकृतिं याति भारत ।
मयैव कथितं पूर्वं भूलिङ्गशकुनिर्यथा ॥ ०१८ ॥

भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे ।
भीष्म तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः ॥ ०१९ ॥

मा साहसमितीदं सा सततं वाशते किल ।
साहसं चात्मनातीव चरन्ती नावबुध्यते ॥ ०२० ॥

सा हि मांसार्गलं भीष्म मुखात्सिंहस्य खादतः ।
दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना ॥ ०२१ ॥

इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयम् ।
तद्वत्त्वमप्यधर्मज्ञ सदा वाचः प्रभाषसे ॥ ०२२ ॥

इच्छतां पार्थिवेन्द्राणां भीष्म जीवस्यसंशयम् ।
लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः ॥ ०२३ ॥

वैशंपायन उवाच ॥

ततश्चेदिपतेः श्रुत्वा भीष्मः स कटुकं वचः ।
उवाचेदं वचो राजंश्चेदिराजस्य शृण्वतः ॥ ०२४ ॥

इच्छतां किल नामाहं जीवाम्येषां महीक्षिताम् ।
योऽहं न गणयाम्येतांस्तृणानीव नराधिपान् ॥ ०२५ ॥

एवमुक्ते तु भीष्मेण ततः सञ्चुक्रुधुर्नृपाः ।
केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे ॥ ०२६ ॥

केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य तद्वचः ।
पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमाम् ॥ ०२७ ॥

हन्यतां दुर्मतिर्भीष्मः पशुवत्साध्वयं नृपैः ।
सर्वैः समेत्य संरब्धैर्दह्यतां वा कटाग्निना ॥ ०२८ ॥

इति तेषां वचः श्रुत्वा ततः कुरुपितामहः ।
उवाच मतिमान्भीष्मस्तानेव वसुधाधिपान् ॥ ०२९ ॥

उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ।
यत्तु वक्ष्यामि तत्सर्वं शृणुध्वं वसुधाधिपाः ॥ ०३० ॥

पशुवद्घातनं वा मे दहनं वा कटाग्निना ।
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम् ॥ ०३१ ॥

एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः ।

यस्य वस्त्वरते बुद्धिर्मरणाय स माधवम् ॥ ०३२ ॥

कृष्णमाह्वयतामद्य युद्धे शार्ङ्गगदाधरम् ।
यावदस्यैव देवस्य देहं विशतु पातितः ॥ ०३३ ॥

---

# अध्याय ०४२

वैशंपायन उवाच ॥

ततः श्रुत्वैव भीष्मस्य चेदिराडुरुविक्रमः ।
युयुत्सुर्वासुदेवेन वासुदेवमुवाच ह ॥ ००१ ॥

आह्वये त्वां रणं गच्छ मया सार्धं जनार्दन ।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः ॥ ००२ ॥

सह त्वया हि मे वध्याः पाण्डवाः कृष्ण सर्वथा ।
नृपतीन्समतिक्रम्य यैरराजा त्वमर्चितः ॥ ००३ ॥

ये त्वां दासमराजानं बाल्यादर्चन्ति दुर्मतिम् ।
अनर्हमर्हवत्कृष्ण वध्यास्त इति मे मतिः ॥ ००४ ॥

इत्युक्त्वा राजशार्दूलस्तस्थौ गर्जन्नमर्षणः ॥ ००४ ॥

एवमुक्ते ततः कृष्णो मृदुपूर्वमिदं वचः ।
उवाच पार्थिवान्सर्वांस्तत्समक्षं च पाण्डवान् ॥ ००५ ॥

एष नः शत्रुरत्यन्तं पार्थिवाः सात्वतीसुतः ।

सात्वतानां नृशंसात्मा न हितोऽनपकारिणाम् ॥ ००६ ॥

प्राग्ज्योतिषपुरं यातानस्माञ्ज्ञात्वा नृशंसकृत् ।
अदहद्द्वारकामेष स्वस्रीयः सन्नराधिपाः ॥ ००७ ॥

क्रीडतो भोजराजन्यानेष रैवतके गिरौ ।
हत्वा बद्ध्वा च तान्सर्वानुपायात्स्वपुरं पुरा ॥ ००८ ॥

अश्वमेधे हयं मेध्यमुत्सृष्टं रक्षिभिर्वृतम् ।
पितुर्मे यज्ञविघ्नार्थमहरत्पापनिश्चयः ॥ ००९ ॥

सौवीरान्प्रतिपत्तौ च बभ्रोरेष यशस्विनः ।
भार्यामभ्यहरन्मोहादकामां तामितो गताम् ॥ ०१० ॥

एष मायाप्रतिच्छन्नः करूषार्थे तपस्विनीम् ।
जहार भद्रां वैशालीं मातुलस्य नृशंसकृत् ॥ ०११ ॥

पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम् ।
दिष्ट्या त्विदं सर्वराज्ञां संनिधावद्य वर्तते ॥ ०१२ ॥

पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम् ।
कृतानि तु परोक्षं मे यानि तानि निबोधत ॥ ०१३ ॥

इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम् ।
अवलेपाद्वधार्हस्य समग्रे राजमण्डले ॥ ०१४ ॥

रुक्मिण्यामस्य मूढस्य प्रार्थनासीन्मुमूर्षतः ।
न च तां प्राप्तवान्मूढः शूद्रो वेदश्रुतिं यथा ॥ ०१५ ॥

एवमादि ततः सर्वे सहितास्ते नराधिपाः ।
वासुदेववचः श्रुत्वा चेदिराजं व्यगर्हयन् ॥ ०१६ ॥

ततस्तद्वचनं श्रुत्वा शिशुपालः प्रतापवान् ।
जहास स्वनवद्धासं प्रहस्येदमुवाच ह ॥ ०१७ ॥

मत्पूर्वां रुक्मिणीं कृष्ण संसत्सु परिकीर्तयन् ।
विशेषतः पार्थिवेषु व्रीडां न कुरुषे कथम् ॥ ०१८ ॥

मन्यमानो हि कः सत्सु पुरुषः परिकीर्तयेत् ।
अन्यपूर्वां स्त्रियं जातु त्वदन्यो मधुसूदन ॥ ०१९ ॥

क्षम वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम ।
क्रुद्धाद्वापि प्रसन्नाद्वा किं मे त्वत्तो भविष्यति ॥ ०२० ॥

तथा ब्रुवत एवास्य भगवान्मधुसूदनः ।
व्यपाहरच्छिरः क्रुद्धश्चक्रेणामित्रकर्षणः ॥ ०२१ ॥

स पपात महाबाहुर्वज्राहत इवाचलः ॥ ०२१ ॥

ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशुर्नृपाः ।
उत्पतन्तं महाराज गगनादिव भास्करम् ॥ ०२२ ॥

ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् ।
ववन्दे तत्तदा तेजो विवेश च नराधिप ॥ ०२३ ॥

तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः ।
यद्विवेश महाबाहुं तत्तेजः पुरुषोत्तमम् ॥ ०२४ ॥

अनभ्रे प्रववर्ष द्यौः पपात ज्वलिताशनिः ।
कृष्णेन निहते चैद्ये चचाल च वसुंधरा ॥ ०२५ ॥

ततः केचिन्महीपाला नाब्रुवंस्तत्र किञ्चन ।

अतीतवाक्पथे काले प्रेक्षमाणा जनार्दनम् ॥ ०२६ ॥

हस्तैर्हस्ताग्रमपरे प्रत्यपीषन्नमर्षिताः ।
अपरे दशनैरोष्ठानदशन्क्रोधमूर्छिताः ॥ ०२७ ॥

रहस्तु केचिद्वार्ष्णेयं प्रशशंसुर्नराधिपाः ।
केचिदेव तु संरब्धा मध्यस्थास्त्वपरेऽभवन् ॥ ०२८ ॥

प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो महर्षयः ।
ब्राह्मणाश्च महात्मानः पार्थिवाश्च महाबलाः ॥ ०२९ ॥

पाण्डवस्त्वब्रवीद्भ्रातॄन्सत्कारेण महीपतिम् ।
दमघोषात्मजं वीरं संसाधयत मा चिरम् ॥ ०३० ॥

तथा च कृतवन्तस्ते भ्रातुर्वै शासनं तदा ॥ ०३० ॥

चेदीनामाधिपत्ये च पुत्रमस्य महीपतिम् ।
अभ्यषिञ्चत्तदा पार्थः सह तैर्वसुधाधिपैः ॥ ०३१ ॥

ततः स कुरुराजस्य क्रतुः सर्वसमृद्धिमान् ।
यूनां प्रीतिकरो राजन्संबभौ विपुलौजसः ॥ ०३२ ॥

शान्तविघ्नः सुखारम्भः प्रभूतधनधान्यवान् ।
अन्नवान्बहुभक्ष्यश्च केशवेन सुरक्षितः ॥ ०३३ ॥

समापयामास च तं राजसूयं महाक्रतुम् ।
तं तु यज्ञं महाबाहुरा समाप्तेर्जनार्दनः ॥ ०३४ ॥

ररक्ष भगवाञ्शौरिः शार्ङ्गचक्रगदाधरः ॥ ०३४ ॥

ततस्त्ववभृथस्नातं धर्मराजं युधिष्ठिरम् ।

समस्तं पार्थिवं क्षत्रमभिगम्येदमब्रवीत् ॥ ०३५ ॥

दिष्ट्या वर्धसि धर्मज्ञ साम्राज्यं प्राप्तवान्विभो ।
आजमीढाजमीढानां यशः संवर्धितं त्वया ॥ ०३६ ॥

कर्मणैतेन राजेन्द्र धर्मश्च सुमहान्कृतः ॥ ०३६ ॥

आपृच्छामो नरव्याघ्र सर्वकामैः सुपूजिताः ।
स्वराष्ट्राणि गमिष्यामस्तदनुज्ञातुमर्हसि ॥ ०३७ ॥

श्रुत्वा तु वचनं राज्ञां धर्मराजो युधिष्ठिरः ।
यथार्हं पूज्य नृपतीन्भ्रातॄन्सर्वानुवाच ह ॥ ०३८ ॥

राजानः सर्व एवैते प्रीत्यास्मान्समुपागताः ।
प्रस्थिताः स्वानि राष्ट्राणि मामापृच्छ्य परंतपाः ॥ ०३९ ॥

तेऽनुव्रजत भद्रं वो विषयान्तं नृपोत्तमान् ॥ ०३९ ॥

भ्रातुर्वचनमाज्ञाय पाण्डवा धर्मचारिणः ।
यथार्हं नृपमुख्यांस्तानेकैकं समनुव्रजन् ॥ ०४० ॥

विराटमन्वयात्तूर्णं धृष्टद्युम्नः प्रतापवान् ।
धनञ्जयो यज्ञसेनं महात्मानं महारथः ॥ ०४१ ॥

भीष्मं च धृतराष्ट्रं च भीमसेनो महाबलः ।
द्रोणं च ससुतं वीरं सहदेवो महारथः ॥ ०४२ ॥

नकुलः सुबलं राजन्सहपुत्रं समन्वयात् ।
द्रौपदेयाः ससौभद्राः पार्वतीयान्महीपतीन् ॥ ०४३ ॥

अन्वगच्छंस्तथैवान्यान्क्षत्रियान्क्षत्रियर्षभाः ।

एवं संपूजितास्ते वै जग्मुर्विप्राश्च सर्वशः ॥ ०४४ ॥

गतेषु पार्थिवेन्द्रेषु सर्वेषु भरतर्षभ ।
युधिष्ठिरमुवाचेदं वासुदेवः प्रतापवान् ॥ ०४५ ॥

आपृच्छे त्वां गमिष्यामि द्वारकां कुरुनन्दन ।
राजसूयं क्रतुश्रेष्ठं दिष्ट्या त्वं प्राप्तवानसि ॥ ०४६ ॥

तमुवाचैवमुक्तस्तु धर्मराण्मधुसूदनम् ।
तव प्रसादाद्गोविन्द प्राप्तवानस्मि वै क्रतुम् ॥ ०४७ ॥

समस्तं पार्थिवं क्षत्रं त्वत्प्रसादाद्वशानुगम् ।
उपादाय बलिं मुख्यं मामेव समुपस्थितम् ॥ ०४८ ॥

न वयं त्वामृते वीर रंस्यामेह कथञ्चन ।
अवश्यं चापि गन्तव्या त्वया द्वारवती पुरी ॥ ०४९ ॥

एवमुक्तः स धर्मात्मा युधिष्ठिरसहायवान् ।
अभिगम्याब्रवीत्प्रीतः पृथां पृथुयशा हरिः ॥ ०५० ॥

साम्राज्यं समनुप्राप्ताः पुत्रास्तेऽद्य पितृष्वसः ।
सिद्धार्था वसुमन्तश्च सा त्वं प्रीतिमवाप्नुहि ॥ ०५१ ॥

अनुज्ञातस्त्वया चाहं द्वारकां गन्तुमुत्सहे ।
सुभद्रां द्रौपदीं चैव सभाजयत केशवः ॥ ०५२ ॥

निष्क्रम्यान्तःपुराच्चैव युधिष्ठिरसहायवान् ।
स्नातश्च कृतजप्यश्च ब्राह्मणान्स्वस्ति वाच्य च ॥ ०५३ ॥

ततो मेघवरप्रख्यं स्यन्दनं वै सुकल्पितम् ।
योजयित्वा महाराज दारुकः प्रत्युपस्थितः ॥ ०५४ ॥

उपस्थितं रथं दृष्ट्वा तार्क्ष्यप्रवरकेतनम् ।
प्रदक्षिणमुपावृत्य समारुह्य महामनाः ॥ ०५५ ॥

प्रययौ पुण्डरीकाक्षस्ततो द्वारवतीं पुरीम् ॥ ०५५ ॥

तं पद्भ्यामनुवव्राज धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः श्रीमान्वासुदेवं महाबलम् ॥ ०५६ ॥

ततो मुहूर्तं सङ्गृह्य स्यन्दनप्रवरं हरिः ।
अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ ०५७ ॥

अप्रमत्तः स्थितो नित्यं प्रजाः पाहि विशां पते ।
पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ॥ ०५८ ॥

बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवामराः ॥ ०५८ ॥

कृत्वा परस्परेणैवं संविदं कृष्णपाण्डवौ ।
अन्योन्यं समनुज्ञाप्य जग्मतुः स्वगृहान्प्रति ॥ ०५९ ॥

गते द्वारवतीं कृष्णे सात्वतप्रवरे नृप ।
एको दुर्योधनो राजा शकुनिश्चापि सौबलः ॥ ०६० ॥

तस्यां सभायां दिव्यायामूषतुस्तौ नरर्षभौ ॥ ०६० ॥

# द्यूतपर्व

## अध्याय ०४३

वैशंपायन उवाच ॥

वसन्दुर्योधनस्तस्यां सभायां भरतर्षभ ।
शनैर्ददर्श तां सर्वां सभां शकुनिना सह ॥ ००१ ॥

तस्यां दिव्यानभिप्रायान्ददर्श कुरुनन्दनः ।
न दृष्टपूर्वा ये तेन नगरे नागसाह्वये ॥ ००२ ॥

स कदाचित्सभामध्ये धार्तराष्ट्रो महीपतिः ।
स्फाटिकं तलमासाद्य जलमित्यभिशङ्कया ॥ ००३ ॥

स्ववस्त्रोत्कर्षणं राजा कृतवान्बुद्धिमोहितः ।
दुर्मना विमुखश्चैव परिचक्राम तां सभाम् ॥ ००४ ॥

ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम् ।
वापीं मत्वा स्थलमिति सवासाः प्रापतज्जले ॥ ००५ ॥

जले निपतितं दृष्ट्वा किङ्करा जहसुर्भृशम् ।
वासांसि च शुभान्यस्मै प्रददू राजशासनात् ॥ ००६ ॥

तथागतं तु तं दृष्ट्वा भीमसेनो महाबलः ।
अर्जुनश्च यमौ चोभौ सर्वे ते प्राहसंस्तदा ॥ ००७ ॥

नामर्षयत्ततस्तेषामवहासममर्षणः ।
आकारं रक्षमाणस्तु न स तान्समुदैक्षत ॥ ००८ ॥

पुनर्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलम् ।
आरुरोह ततः सर्वे जहसुस्ते पुनर्जनाः ॥ ००९ ॥

द्वारं च विवृताकारं ललाटेन समाहनत् ।
संवृतं चेति मन्वानो द्वारदेशादुपारमत् ॥ ०१० ॥

एवं प्रलम्भान्विविधान्प्राप्य तत्र विशां पते ।
पाण्डवेयाभ्यनुज्ञातस्ततो दुर्योधनो नृपः ॥ ०११ ॥

अप्रहृष्टेन मनसा राजसूये महाक्रतौ ।
प्रेक्ष्य तामद्भुतामृद्धिं जगाम गजसाह्वयम् ॥ ०१२ ॥

पाण्डवश्रीप्रतप्तस्य ध्यानग्लानस्य गच्छतः ।
दुर्योधनस्य नृपतेः पापा मतिरजायत ॥ ०१३ ॥

पार्थान्सुमनसो दृष्ट्वा पार्थिवांश्च वशानुगान् ।
कृत्स्नं चापि हितं लोकमाकुमारं कुरूद्वह ॥ ०१४ ॥

महिमानं परं चापि पाण्डवानां महात्मनाम् ।
दुर्योधनो धार्तराष्ट्रो विवर्णः समपद्यत ॥ ०१५ ॥

स तु गच्छन्ननेकाग्रः सभामेवानुचिन्तयन् ।
श्रियं च तामनुपमां धर्मराजस्य धीमतः ॥ ०१६ ॥

प्रमत्तो धृतराष्ट्रस्य पुत्रो दुर्योधनस्तदा ।
नाभ्यभाषत्सुबलजं भाषमाणं पुनः पुनः ॥ ०१७ ॥

अनेकाग्रं तु तं दृष्ट्वा शकुनिः प्रत्यभाषत ।
दुर्योधन कुतोमूलं निःश्वसन्निव गच्छसि ॥ ०१८ ॥

दुर्योधन उवाच ॥

दृष्ट्वेमां पृथिवीं कृत्स्नां युधिष्ठिरवशानुगाम् ।
जितामस्त्रप्रतापेन श्वेताश्वस्य महात्मनः ॥ ०१९ ॥

तं च यज्ञं तथाभूतं दृष्ट्वा पार्थस्य मातुल ।
यथा शक्रस्य देवेषु तथाभूतं महाद्युते ॥ ०२० ॥

अमर्षेण सुसंपूर्णो दह्यमानो दिवानिशम् ।
शुचिशुक्रागमे काले शुष्ये तोयमिवाल्पकम् ॥ ०२१ ॥

पश्य सात्वतमुख्येन शिशुपालं निपातितम् ।
न च तत्र पुमानासीत्कश्चित्तस्य पदानुगः ॥ ०२२ ॥

दह्यमाना हि राजानः पाण्डवोत्थेन वह्निना ।
क्षान्तवन्तोऽपराधं तं को हि तं क्षन्तुमर्हति ॥ ०२३ ॥

वासुदेवेन तत्कर्म तथायुक्तं महत्कृतम् ।
सिद्धं च पाण्डवेयानां प्रतापेन महात्मनाम् ॥ ०२४ ॥

तथा हि रत्नान्यादाय विविधानि नृपा नृपम् ।
उपतिष्ठन्ति कौन्तेयं वैश्या इव करप्रदाः ॥ ०२५ ॥

श्रियं तथाविधां दृष्ट्वा ज्वलन्तीमिव पाण्डवे ।
अमर्षवशमापन्नो दह्येऽहमतथोचितः ॥ ०२६ ॥

वह्निमेव प्रवेक्ष्यामि भक्षयिष्यामि वा विषम् ।
अपो वापि प्रवेक्ष्यामि न हि शक्ष्यामि जीवितुम् ॥ ०२७ ॥

को हि नाम पुमा.ण्ल्लोके मर्षयिष्यति सत्त्ववान् ।
सपत्नानृध्यतो दृष्ट्वा हानिमात्मन एव च ॥ ०२८ ॥

सोऽहं न स्त्री न चाप्यस्त्री न पुमान्नापुमानपि ।
योऽहं तां मर्षयाम्यद्य तादृशीं श्रियमागताम् ॥ ०२९ ॥

ईश्वरत्वं पृथिव्याश्च वसुमत्तां च तादृशीम् ।
यज्ञं च तादृशं दृष्ट्वा मादृशः को न सञ्ज्वरेत् ॥ ०३० ॥

अशक्तश्चैक एवाहं तामाहर्तुं नृपश्रियम् ।
सहायांश्च न पश्यामि तेन मृत्युं विचिन्तये ॥ ०३१ ॥

दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।
दृष्ट्वा कुन्तीसुते शुभ्रां श्रियं तामाहृतां तथा ॥ ०३२ ॥

कृतो यत्नो मया पूर्वं विनाशे तस्य सौबल ।
तच्च सर्वमतिक्रम्य स वृद्धोऽप्स्विव पङ्कजम् ॥ ०३३ ॥

तेन दैवं परं मन्ये पौरुषं तु निरर्थकम् ।
धार्तराष्ट्रा हि हीयन्ते पार्था वर्धन्ति नित्यशः ॥ ०३४ ॥

सोऽहं श्रियं च तां दृष्ट्वा सभां तां च तथाविधाम् ।
रक्षिभिश्चावहासं तं परितप्ये यथाग्निना ॥ ०३५ ॥

स मामभ्यनुजानीहि मातुलाद्य सुदुःखितम् ।
अमर्षं च समाविष्टं धृतराष्ट्रे निवेदय ॥ ०३६ ॥

---

# अध्याय ०४४

शकुनिरुवाच ॥

दुर्योधन न तेऽमर्षः कार्यः प्रति युधिष्ठिरम् ।
भागधेयानि हि स्वानि पाण्डवा भुञ्जते सदा ॥ ००१ ॥

अनेकैरभ्युपायैश्च त्वयारब्धाः पुरासकृत् ।
विमुक्ताश्च नरव्याघ्रा भागधेयपुरस्कृताः ॥ ००२ ॥

तैर्लब्धा द्रौपदी भार्या द्रुपदश्च सुतैः सह ।
सहायः पृथिवीलाभे वासुदेवश्च वीर्यवान् ॥ ००३ ॥

लब्धश्च नाभिभूतोऽर्थः पित्र्योंऽशः पृथिवीपते ।
विवृद्धस्तेजसा तेषां तत्र का परिदेवना ॥ ००४ ॥

धनञ्जयेन गाण्डीवमक्षय्यौ च महेषुधी ।
लब्धान्यस्त्राणि दिव्यानि तर्पयित्वा हुताशनम् ॥ ००५ ॥

तेन कार्मुकमुख्येन बाहुवीर्येण चात्मनः ।
कृता वशे महीपालास्तत्र का परिदेवना ॥ ००६ ॥

अग्निदाहान्मयं चापि मोक्षयित्वा स दानवम् ।
सभां तां कारयामास सव्यसाची परंतपः ॥ ००७ ॥

तेन चैव मयेनोक्ताः किङ्करा नाम राक्षसाः ।
वहन्ति तां सभां भीमास्तत्र का परिदेवना ॥ ००८ ॥

यच्चासहायतां राजन्नुक्तवानसि भारत ।
तन्मिथ्या भ्रातरो हीमे सहायास्ते महारथाः ॥ ००९ ॥

द्रोणस्तव महेष्वासः सह पुत्रेण धीमता ।
सूतपुत्रश्च राधेयो गौतमश्च महारथः ॥ ०१० ॥

अहं च सह सोदर्यैः सौमदत्तिश्च वीर्यवान् ।
एतैस्त्वं सहितः सर्वैर्जय कृत्स्नां वसुंधराम् ॥ ०११ ॥

दुर्योधन उवाच ॥

त्वया च सहितो राजन्नेतैश्चान्यैर्महारथैः ।
एतानेव विजेष्यामि यदि त्वमनुमन्यसे ॥ ०१२ ॥

एतेषु विजितेष्वद्य भविष्यति मही मम ।
सर्वे च पृथिवीपालाः सभा सा च महाधना ॥ ०१३ ॥

शकुनिरुवाच ॥

धनञ्जयो वासुदेवो भीमसेनो युधिष्ठिरः ।
नकुलः सहदेवश्च द्रुपदश्च सहात्मजैः ॥ ०१४ ॥

नैते युधि बलाज्जेतुं शक्याः सुरगणैरपि ।
महारथा महेष्वासाः कृतास्त्रा युद्धदुर्मदाः ॥ ०१५ ॥

अहं तु तद्विजानामि विजेतुं येन शक्यते ।
युधिष्ठिरं स्वयं राजंस्तन्निबोध जुषस्व च ॥ ०१६ ॥

दुर्योधन उवाच ॥

अप्रमादेन सुहृदामन्येषां च महात्मनाम् ।
यदि शक्या विजेतुं ते तन्ममाचक्ष्व मातुल ॥ ०१७ ॥

शकुनिरुवाच ॥

द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम् ।
समाहूतश्च राजेन्द्रो न शक्ष्यति निवर्तितुम् ॥ ०१८ ॥

देवने कुशलश्चाहं न मेऽस्ति सदृशो भुवि ।
त्रिषु लोकेषु कौन्तेयं तं त्वं द्यूते समाह्वय ॥ ०१९ ॥

तस्याक्षकुशलो राजन्नादास्येऽहमसंशयम् ।
राज्यं श्रियं च तां दीप्तां त्वदर्थं पुरुषर्षभ ॥ ०२० ॥

इदं तु सर्वं त्वं राज्ञे दुर्योधन निवेदय ।
अनुज्ञातस्तु ते पित्रा विजेष्ये तं न संशयः ॥ ०२१ ॥

दुर्योधन उवाच ॥

त्वमेव कुरुमुख्याय धृतराष्ट्राय सौबल ।
निवेदय यथान्यायं नाहं शक्ष्ये निशंसितुम् ॥ ०२२ ॥

---

# अध्याय ०४५

वैशंपायन उवाच ॥

अनुभूय तु राज्ञस्तं राजसूयं महाक्रतुम् ।
युधिष्ठिरस्य नृपतेर्गान्धारीपुत्रसंयुतः ॥ ००१ ॥

प्रियकृन्मतमाज्ञाय पूर्वं दुर्योधनस्य तत् ।
प्रज्ञाचक्षुषमासीनं शकुनिः सौबलस्तदा ॥ ००२ ॥

दुर्योधनवचः श्रुत्वा धृतराष्ट्रं जनाधिपम् ।
उपगम्य महाप्राज्ञं शकुनिर्वाक्यमब्रवीत् ॥ ००३ ॥

दुर्योधनो महाराज विवर्णो हरिणः कृशः ।
दीनश्चिन्तापरश्चैव तद्विद्धि भरतर्षभ ॥ ००४ ॥

न वै परीक्षसे सम्यगसह्यं शत्रुसंभवम् ।
ज्येष्ठपुत्रस्य शोकं त्वं किमर्थं नावबुध्यसे ॥ ००५ ॥

धृतराष्ट्र उवाच ॥

दुर्योधन कुतोमूलं भृशमार्तोऽसि पुत्रक ।
श्रोतव्यश्चेन्मया सोऽर्थो ब्रूहि मे कुरुनन्दन ॥ ००६ ॥

अयं त्वां शकुनिः प्राह विवर्णं हरिणं कृशम् ।
चिन्तयंश्च न पश्यामि शोकस्य तव संभवम् ॥ ००७ ॥

ऐश्वर्यं हि महत्पुत्र त्वयि सर्वं समर्पितम् ।
भ्रातरः सुहृदश्चैव नाचरन्ति तवाप्रियम् ॥ ००८ ॥

आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
आजानेया वहन्ति त्वां केनासि हरिणः कृशः ॥ ००९ ॥

शयनानि महार्हाणि योषितश्च मनोरमाः ।
गुणवन्ति च वेश्मानि विहाराश्च यथासुखम् ॥ ०१० ॥

देवानामिव ते सर्वं वाचि बद्धं न संशयः ।
स दीन इव दुर्धर्षः कस्माच्छोचसि पुत्रक ॥ ०११ ॥

दुर्योधन उवाच ॥

अश्नाम्याच्छादये चाहं यथा कुपुरुषस्तथा ।
अमर्षं धारये चोग्रं तितिक्षन्कालपर्ययम् ॥ ०१२ ॥

अमर्षणः स्वाः प्रकृतीरभिभूय परे स्थिताः ।
क्लेशान्मुमुक्षुः परजान्स वै पुरुष उच्यते ॥ ०१३ ॥

संतोषो वै श्रियं हन्ति अभिमानश्च भारत ।
अनुक्रोशभये चोभे यैर्वृतो नाश्नुते महत् ॥ ०१४ ॥

न मामवति तद्भुक्तं श्रियं दृष्ट्वा युधिष्ठिरे ।
ज्वलन्तीमिव कौन्तेये विवर्णकरणीं मम ॥ ०१५ ॥

सपत्नानृध्यतोऽऽत्मानं हीयमानं निशाम्य च ।
अदृश्यामपि कौन्तेये स्थितां पश्यन्निवोद्यताम् ॥ ०१६ ॥

तस्मादहं विवर्णश्च दीनश्च हरिणः कृशः ॥ ०१६ ॥

अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥ ०१७ ॥

दशान्यानि सहस्राणि नित्यं तत्रान्नमुत्तमम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ ०१८ ॥

कदलीमृगमोकानि कृष्णश्यामारुणानि च ।
काम्बोजः प्राहिणोत्तस्मै परार्ध्यानपि कम्बलान् ॥ ०१९ ॥

रथयोषिद्गवाश्वस्य शतशोऽथ सहस्रशः ।
त्रिंशतं चोष्ट्रवामीनां शतानि विचरन्त्युत ॥ ०२० ॥

पृथग्विधानि रत्नानि पार्थिवाः पृथिवीपते ।
आहरन्क्रतुमुख्येऽस्मिन्कुन्तीपुत्राय भूरिशः ॥ ०२१ ॥

न क्वचिद्धि मया दृष्टस्तादृशो नैव च श्रुतः ।

यादृग्धनागमो यज्ञे पाण्डुपुत्रस्य धीमतः ॥ ०२२ ॥

अपर्यन्तं धनौघं तं दृष्ट्वा शत्रोरहं नृप ।
शर्म नैवाधिगच्छामि चिन्तयानोऽनिशं विभो ॥ ०२३ ॥

ब्राह्मणा वाटधानाश्च गोमन्तः शतसंघशः ।
त्रैखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः ॥ ०२४ ॥

कमण्डलूनुपादाय जातरूपमयाञ्शुभान् ।
एवं बलिं समादाय प्रवेशं लेभिरे ततः ॥ ०२५ ॥

यन्नैव मधु शक्राय धारयन्त्यमरस्त्रियः ।
तदस्मै कांस्यमाहार्षीद्वारुणं कलशोदधिः ॥ ०२६ ॥

शैक्यं रुक्मसहस्रस्य बहुरत्नविभूषितम् ।
दृष्ट्वा च मम तत्सर्वं ज्वररूपमिवाभवत् ॥ ०२७ ॥

गृहीत्वा तत्तु गच्छन्ति समुद्रौ पूर्वदक्षिणौ ।
तथैव पश्चिमं यान्ति गृहीत्वा भरतर्षभ ॥ ०२८ ॥

उत्तरं तु न गच्छन्ति विना तात पतत्रिभिः ।
इदं चाद्भुतमत्रासीत्तन्मे निगदतः शृणु ॥ ०२९ ॥

पूर्णे शतसहस्रे तु विप्राणां परिविष्यताम् ।
स्थापिता तत्र सञ्ज्ञाभूच्छङ्खो ध्मायति नित्यशः ॥ ०३० ॥

मुहुर्मुहुः प्रणदतस्तस्य शङ्खस्य भारत ।
उत्तमं शब्दमश्रौषं ततो रोमाणि मेऽहृषन् ॥ ०३१ ॥

पार्थिवैर्बहुभिः कीर्णमुपस्थानं दिदृक्षुभिः ।
सर्वरत्नान्युपादाय पार्थिवा वै जनेश्वर ॥ ०३२ ॥

यज्ञे तस्य महाराज पाण्डुपुत्रस्य धीमतः ।
वैश्या इव महीपाला द्विजातिपरिवेषकाः ॥ ०३३ ॥

न सा श्रीर्देवराजस्य यमस्य वरुणस्य वा ।
गुह्यकाधिपतेर्वापि या श्री राजन्युधिष्ठिरे ॥ ०३४ ॥

तां दृष्ट्वा पाण्डुपुत्रस्य श्रियं परमिकामहम् ।
शान्तिं न परिगच्छामि दह्यमानेन चेतसा ॥ ०३५ ॥

शकुनिरुवाच ॥

यामेतामुत्तमां लक्ष्मीं दृष्टवानसि पाण्डवे ।
तस्याः प्राप्तावुपायं मे शृणु सत्यपराक्रम ॥ ०३६ ॥

अहमक्षेष्वभिज्ञातः पृथिव्यामपि भारत ।
हृदयज्ञः पणज्ञश्च विशेषज्ञश्च देवने ॥ ०३७ ॥

द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम् ।
आहूतश्चैष्यति व्यक्तं दीव्यावेत्याह्वयस्व तम् ॥ ०३८ ॥

वैशंपायन उवाच ॥

एवमुक्तः शकुनिना राजा दुर्योधनस्तदा ।
धृतराष्ट्रमिदं वाक्यमपदान्तरमब्रवीत् ॥ ०३९ ॥

अयमुत्सहते राजञ्श्रियमाहर्तुमक्षवित् ।
द्यूतेन पाण्डुपुत्रस्य तदनुज्ञातुमर्हसि ॥ ०४० ॥

धृतराष्ट्र उवाच ॥

क्षत्ता मन्त्री महाप्राज्ञः स्थितो यस्यास्मि शासने ।
तेन सङ्गम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ॥ ०४१ ॥

स हि धर्मं पुरस्कृत्य दीर्घदर्शी परं हितम् ।
उभयोः पक्षयोर्युक्तं वक्ष्यत्यर्थविनिश्चयम् ॥ ०४२ ॥

दुर्योधन उवाच ॥

निवर्तयिष्यति त्वासौ यदि क्षत्ता समेष्यति ।
निवृत्ते त्वयि राजेन्द्र मरिष्येऽहमसंशयम् ॥ ०४३ ॥

स मयि त्वं मृते राजन्विदुरेण सुखी भव ।
भोक्ष्यसे पृथिवीं कृत्स्नां किं मया त्वं करिष्यसि ॥ ०४४ ॥

वैशंपायन उवाच ॥

आर्तवाक्यं तु तत्तस्य प्रणयोक्तं निशम्य सः ।
धृतराष्ट्रोऽब्रवीत्प्रेष्यान्दुर्योधनमते स्थितः ॥ ०४५ ॥

स्थूणासहस्रैर्बृहतीं शतद्वारां सभां मम ।
मनोरमां दर्शनीयामाशु कुर्वन्तु शिल्पिनः ॥ ०४६ ॥

ततः संस्तीर्य रत्नैस्तामक्षानावाप्य सर्वशः ।
सुकृतां सुप्रवेशां च निवेदयत मे शनैः ॥ ०४७ ॥

दुर्योधनस्य शान्त्यर्थमिति निश्चित्य भूमिपः ।
धृतराष्ट्रो महाराज प्राहिणोद्विदुराय वै ॥ ०४८ ॥

अपृष्ट्वा विदुरं ह्यस्य नासीत्कश्चिद्विनिश्चयः ।
द्यूतदोषांश्च जानन्स पुत्रस्नेहादकृष्यत ॥ ०४९ ॥

तच्छ्रुत्वा विदुरो धीमान्कलिद्वारमुपस्थितम् ।
विनाशमुखमुत्पन्नं धृतराष्ट्रमुपाद्रवत् ॥ ०५० ॥

सोऽभिगम्य महात्मानं भ्राता भ्रातरमग्रजम् ।
मूर्ध्ना प्रणम्य चरणाविदं वचनमब्रवीत् ॥ ०५१ ॥

नाभिनन्दामि ते राजन्व्यवसायमिमं प्रभो ।
पुत्रैर्भेदो यथा न स्याद्द्यूतहेतोस्तथा कुरु ॥ ०५२ ॥

धृतराष्ट्र उवाच ॥

क्षत्तः पुत्रेषु पुत्रैर्मे कलहो न भविष्यति ।
दिवि देवाः प्रसादं नः करिष्यन्ति न संशयः ॥ ०५३ ॥

अशुभं वा शुभं वापि हितं वा यदि वाहितम् ।
प्रवर्ततां सुहृद्द्यूतं दिष्टमेतन्न संशयः ॥ ०५४ ॥

मयि संनिहिते चैव भीष्मे च भरतर्षभे ।
अनयो दैवविहितो न कथञ्चिद्भविष्यति ॥ ०५५ ॥

गच्छ त्वं रथमास्थाय हयैर्वातसमैर्जवे ।
खाण्डवप्रस्थमद्यैव समानय युधिष्ठिरम् ॥ ०५६ ॥

न वार्यो व्यवसायो मे विदुरैतद्ब्रवीमि ते ।
दैवमेव परं मन्ये येनैतदुपपद्यते ॥ ०५७ ॥

इत्युक्तो विदुरो धीमान्नैतदस्तीति चिन्तयन् ।
आपगेयं महाप्राज्ञमभ्यगच्छत्सुदुःखितः ॥ ०५८ ॥

# अध्याय ०४६

जनमेजय उवाच ॥

कथं समभवद्यूतं भ्रातॄणां तन्महात्ययम् ।
यत्र तद्व्यसनं प्राप्तं पाण्डवैर्मे पितामहैः ॥ ००१ ॥

के च तत्र सभास्तारा राजानो ब्रह्मवित्तम ।
के चैनमन्वमोदन्त के चैनं प्रत्यषेधयन् ॥ ००२ ॥

विस्तरेणैतदिच्छामि कथ्यमानं त्वया द्विज ।
मूलं ह्येतद्विनाशस्य पृथिव्या द्विजसत्तम ॥ ००३ ॥

सूत उवाच ॥

एवमुक्तस्तदा राज्ञा व्यासशिष्यः प्रतापवान् ।
आचचक्षे यथावृत्तं तत्सर्वं सर्ववेदवित् ॥ ००४ ॥

वैशंपायन उवाच ॥

शृणु मे विस्तरेणेमां कथां भरतसत्तम ।
भूय एव महाराज यदि ते श्रवणे मतिः ॥ ००५ ॥

विदुरस्य मतं ज्ञात्वा धृतराष्ट्रोऽम्बिकासुतः ।
दुर्योधनमिदं वाक्यमुवाच विजने पुनः ॥ ००६ ॥

अलं द्यूतेन गान्धारे विदुरो न प्रशंसति ।
न ह्यसौ सुमहाबुद्धिरहितं नो वदिष्यति ॥ ००७ ॥

हितं हि परमं मन्ये विदुरो यत्प्रभाषते ।
क्रियतां पुत्र तत्सर्वमेतन्मन्ये हितं तव ॥ ००८ ॥

देवर्षिर्वासवगुरुर्देवराजाय धीमते ।
यत्प्राह शास्त्रं भगवान्बृहस्पतिरुदारधीः ॥ ००९ ॥

तद्वेद विदुरः सर्वं सरहस्यं महाकविः ।
स्थितश्च वचने तस्य सदाहमपि पुत्रक ॥ ०१० ॥

विदुरो वापि मेधावी कुरूणां प्रवरो मतः ।
उद्धवो वा महाबुद्धिर्वृष्णीनामर्चितो नृप ॥ ०११ ॥

द्यूतेन तदलं पुत्र द्यूते भेदो हि दृश्यते ।
भेदे विनाशो राज्यस्य तत्पुत्र परिवर्जय ॥ ०१२ ॥

पित्रा मात्रा च पुत्रस्य यद्वै कार्यं परं स्मृतम् ।
प्राप्तस्त्वमसि तत्तात पितृपैतामहं पदम् ॥ ०१३ ॥

अधीतवान्कृती शास्त्रे लालितः सततं गृहे ।
भ्रातृज्येष्ठः स्थितो राज्ये विन्दसे किं न शोभनम् ॥ ०१४ ॥

पृथग्जनैरलभ्यं यद्भोजनाच्छादनं परम् ।
तत्प्राप्तोऽसि महाबाहो कस्माच्छोचसि पुत्रक ॥ ०१५ ॥

स्फीतं राष्ट्रं महाबाहो पितृपैतामहं महत् ।
नित्यमाज्ञापयन्भासि दिवि देवेश्वरो यथा ॥ ०१६ ॥

तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम् ।
समुत्थितं दुःखतरं तन्मे शंसितुमर्हसि ॥ ०१७ ॥

दुर्योधन उवाच ॥

अश्नाम्याच्छादयामीति प्रपश्यन्पापपूरुषः ।

नामर्षं कुरुते यस्तु पुरुषः सोऽधमः स्मृतः ॥ ०१८ ॥

न मां प्रीणाति राजेन्द्र लक्ष्मीः साधारणा विभो ।
ज्वलितामिव कौन्तेये श्रियं दृष्ट्वा च विव्यथे ॥ ०१९ ॥

सर्वां हि पृथिवीं दृष्ट्वा युधिष्ठिरवशानुगाम् ।
स्थिरोऽस्मि योऽहं जीवामि दुःखादेतद्ब्रवीमि ते ॥ ०२० ॥

आवर्जिता इवाभान्ति निघ्नाश्चैत्रकिकौकुराः ।
कारस्करा लोहजङ्घा युधिष्ठिरनिवेशने ॥ ०२१ ॥

हिमवत्सागरानूपाः सर्वरत्नाकरास्तथा ।
अन्त्याः सर्वे पर्युदस्ता युधिष्ठिरनिवेशने ॥ ०२२ ॥

ज्येष्ठोऽयमिति मां मत्वा श्रेष्ठश्चेति विशां पते ।
युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे ॥ ०२३ ॥

उपस्थितानां रत्नानां श्रेष्ठानामर्घहारिणाम् ।
नादृश्यत परः प्रान्तो नापरस्तत्र भारत ॥ ०२४ ॥

न मे हस्तः समभवद्वसु तत्प्रतिगृह्णतः ।
प्रातिष्ठन्त मयि श्रान्ते गृह्य दूराहृतं वसु ॥ ०२५ ॥

कृतां बिन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम् ।
अपश्यं नलिनीं पूर्णामुदकस्येव भारत ॥ ०२६ ॥

वस्त्रमुत्कर्षति मयि प्राहसत्स वृकोदरः ।
शत्रोर्ऋद्धिविशेषेण विमूढं रत्नवर्जितम् ॥ ०२७ ॥

तत्र स्म यदि शक्तः स्यां पातयेयं वृकोदरम् ।
सपत्नेनावहासो हि स मां दहति भारत ॥ ०२८ ॥

पुनश्च तादृशीमेव वापीं जलजशालिनीम् ।
मत्वा शिलासमां तोये पतितोऽस्मि नराधिप ॥ ०२९ ॥

तत्र मां प्राहसत्कृष्णः पार्थेन सह सस्वनम् ।
द्रौपदी च सह स्त्रीभिर्व्यथयन्ती मनो मम ॥ ०३० ॥

क्लिन्नवस्त्रस्य च जले किङ्करा राजचोदिताः ।
ददुर्वासांसि मेऽन्यानि तच्च दुःखतरं मम ॥ ०३१ ॥

प्रलम्भं च शृणुष्वान्यं गदतो मे नराधिप ।
अद्वारेण विनिर्गच्छन्द्वारसंस्थानरूपिणा ॥ ०३२ ॥

अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः ॥ ०३२ ॥

तत्र मां यमजौ दूरादालोक्य ललितौ किल ।
बाहुभिः परिगृह्णीतां शोचन्तौ सहितावुभौ ॥ ०३३ ॥

उवाच सहदेवस्तु तत्र मां विस्मयन्निव ।
इदं द्वारमितो गच्छ राजन्निति पुनः पुनः ॥ ०३४ ॥

नामधेयानि रत्नानां पुरस्तान्न श्रुतानि मे ।
यानि दृष्टानि मे तस्यां मनस्तपति तच्च मे ॥ ०३५ ॥

---

# अध्याय ०४७

दुर्योधन उवाच ॥

यन्मया पाण्डवानां तु दृष्टं तच्छृणु भारत ।
आहृतं भूमिपालैर्हि वसु मुख्यं ततस्ततः ॥ ००१ ॥

न विन्दे दृढमात्मानं दृष्ट्वाहं तदरेर्धनम् ।
फलतो भूमितो वापि प्रतिपद्यस्व भारत ॥ ००२ ॥

ऐडांश्चैलान्वार्षदंशाञ्जातरूपपरिष्कृतान् ।
प्रावाराजिनमुख्यांश्च काम्बोजः प्रददौ वसु ॥ ००३ ॥

अश्वांस्तित्तिरिकल्माषांस्त्रिशतं शुकनासिकान् ।
उष्ट्रवामीस्त्रिशतं च पुष्टाः पीलुशमीङ्गुदैः ॥ ००४ ॥

गोवासना ब्राह्मणाश्च दासमीयाश्च सर्वशः ।
प्रीत्यर्थं ते महाभागा धर्मराज्ञो महात्मनः ॥ ००५ ॥

त्रिखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः ॥ ००५ ॥

कमण्डलूनुपादाय जातरूपमयाञ्शुभान् ।
एवं बलिं प्रदायाथ प्रवेशं लेभिरे ततः ॥ ००६ ॥

शतं दासीसहस्राणां कार्पासिकनिवासिनाम् ।
श्यामास्तन्व्यो दीर्घकेश्यो हेमाभरणभूषिताः ॥ ००७ ॥

शूद्रा विप्रोत्तमार्हाणि राङ्कवान्यजिनानि च ॥ ००७ ॥

बलिं च कृत्स्नमादाय भरुकच्छनिवासिनः ।
उपनिन्युर्महाराज हयान्गान्धारदेशजान् ॥ ००८ ॥

इन्द्रकृष्टैर्वर्तयन्ति धान्यैर्नदीमुखैश्च ये ।
समुद्रनिष्कुटे जाताः परिसिन्धु च मानवाः ॥ ००९ ॥

ते वैरामाः पारदाश्च वङ्गाश्च कितवैः सह ।
विविधं बलिमादाय रत्नानि विविधानि च ॥ ०१० ॥

अजाविकं गोहिरण्यं खरोष्ट्रं फलजं मधु ।
कम्बलान्विविधांश्चैव द्वारि तिष्ठन्ति वारिताः ॥ ०११ ॥

प्राग्ज्योतिषाधिपः शूरो म्लेच्छानामधिपो बली ।
यनवैः सहितो राजा भगदत्तो महारथः ॥ ०१२ ॥

आजानेयान्हयाञ्शीघ्रानादायानिलरंहसः ।
बलिं च कृत्स्नमादाय द्वारि तिष्ठति वारितः ॥ ०१३ ॥

अश्मसारमयं भाण्डं शुद्धदन्तत्सरूनसीन् ।
प्राग्ज्योतिषोऽथ तद्दत्त्वा भगदत्तोऽव्रजत्तदा ॥ ०१४ ॥

द्व्यक्षांस्त्र्यक्षा.ल्ललाटाक्षान्नानादिग्भ्यः समागतान् ।
औष्णीषाननिवासांश्च बाहुकान्पुरुषादकान् ॥ ०१५ ॥

एकपादांश्च तत्राहमपश्यं द्वारि वारितान् ।
बल्यर्थं ददतस्तस्मै हिरण्यं रजतं बहु ॥ ०१६ ॥

इन्द्रगोपकवर्णाभाञ्शुकवर्णान्मनोजवान् ।
तथैवेन्द्रायुधनिभान्संध्याभ्रसदृशानपि ॥ ०१७ ॥

अनेकवर्णानारण्यान्गृहीत्वाश्वान्मनोजवान् ।
जातरूपमनर्घ्यं च ददुस्तस्यैकपादकाः ॥ ०१८ ॥

चीनान्हूणाञ्शकानोड्रान्पर्वतान्तरवासिनः ।
वार्ष्णेयान्हारहूणांश्च कृष्णान्हैमवतांस्तथा ॥ ०१९ ॥

न पारयाम्यभिगतान्विविधान्द्वारि वारितान् ।

बल्यर्थं ददतस्तस्य नानारूपाननेकशः ॥ ०२० ॥

कृष्णग्रीवान्महाकायान्रासभाञ्शतपातिनः ।
आहार्षुर्दशसाहस्रान्विनीतान्दिक्षु विश्रुतान् ॥ ०२१ ॥

प्रमाणरागस्पर्शाढ्यं बाह्लीचीनसमुद्भवम् ।
और्णं च राङ्कवं चैव कीटजं पट्टजं तथा ॥ ०२२ ॥

कुट्टीकृतं तथैवान्यत्कमलाभं सहस्रशः ।
श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम् ॥ ०२३ ॥

निशितांश्चैव दीर्घासीनृष्टिशक्तिपरश्वधान् ।
अपरान्तसमुद्भूतांस्तथैव परशूञ्शितान् ॥ ०२४ ॥

रसान्गन्धांश्च विविधान्रत्नानि च सहस्रशः ।
बलिं च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः ॥ ०२५ ॥

शकास्तुखाराः कङ्काश्च रोमशाः शृङ्गिणो नराः ।
महागमान्दूरगमान्गणितानर्बुदं हयान् ॥ ०२६ ॥

कोटिशश्चैव बहुशः सुवर्णं पद्मसंमितम् ।
बलिमादाय विविधं द्वारि तिष्ठन्ति वारिताः ॥ ०२७ ॥

आसनानि महार्हाणि यानानि शयनानि च ।
मणिकाञ्चनचित्राणि गजदन्तमयानि च ॥ ०२८ ॥

रथांश्च विविधाकाराञ्जातरूपपरिष्कृतान् ।
हयैर्विनीतैः संपन्नान्वैयाघ्रपरिवारणान् ॥ ०२९ ॥

विचित्रांश्च परिस्तोमान्रत्नानि च सहस्रशः ।
नाराचानर्धनाराचाञ्शस्त्राणि विविधानि च ॥ ०३० ॥

एतद्दत्त्वा महद्द्रव्यं पूर्वदेशाधिपो नृपः ।
प्रविष्टो यज्ञसदनं पाण्डवस्य महात्मनः ॥ ०३१ ॥

---

# अध्याय ०४८

दुर्योधन उवाच ॥

दायं तु तस्मै विविधं शृणु मे गदतोऽनघ ।
यज्ञार्थं राजभिर्दत्तं महान्तं धनसञ्चयम् ॥ ००१ ॥

मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् ।
ये ते कीचकवेणूनां छायां रम्यामुपासते ॥ ००२ ॥

खशा एकाशनाज्योहाः प्रदरा दीर्घवेणवः ।
पशुपाश्च कुणिन्दाश्च तङ्गणाः परतङ्गणाः ॥ ००३ ॥

ते वै पिपीलिकं नाम वरदत्तं पिपीलिकैः ।
जातरूपं द्रोणमेयमहार्षुः पुञ्जशो नृपाः ॥ ००४ ॥

कृष्णा.ण्ल्ललामांश्चमराञ्शुक्लांश्चान्याञ्शशिप्रभान् ।
हिमवत्पुष्पजं चैव स्वादु क्षौद्रं तथा बहु ॥ ००५ ॥

उत्तरेभ्यः कुरुभ्यश्चाप्यपोढं माल्यमम्बुभिः ।
उत्तरादपि कैलासादोषधीः सुमहाबलाः ॥ ००६ ॥

पार्वतीया बलिं चान्यमाहृत्य प्रणताः स्थिताः ।
अजातशत्रोर्नृपतेर्द्वारि तिष्ठन्ति वारिताः ॥ ००७ ॥

ये परार्धे हिमवतः सूर्योदयगिरौ नृपाः ।
वारिषेणसमुद्रान्ते लोहित्यमभितश्च ये ॥ ००८ ॥

फलमूलाशना ये च किराताश्चर्मवाससः ॥ ००८ ॥

चन्दनागुरुकाष्ठानां भारान्कालीयकस्य च ।
चर्मरत्नसुवर्णानां गन्धानां चैव राशयः ॥ ००९ ॥

कैरातिकानामयुतं दासीनां च विशां पते ।
आहृत्य रमणीयार्थान्दूरजान्मृगपक्षिणः ॥ ०१० ॥

निचितं पर्वतेभ्यश्च हिरण्यं भूरिवर्चसम् ।
बलिं च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः ॥ ०११ ॥

कायव्या दरदा दार्वाः शूरा वैयमकास्तथा ।
औदुम्बरा दुर्विभागाः पारदा बाह्लिकैः सह ॥ ०१२ ॥

काश्मीराः कुन्दमानाश्च पौरका हंसकायनाः ।
शिबित्रिगर्तयौधेया राजन्या मद्रकेकयाः ॥ ०१३ ॥

अम्बष्ठाः कौकुरास्ताक्ष्यार् वस्त्रपाः पह्लवैः सह ।
वसातयः समौलेयाः सह क्षुद्रकमालवैः ॥ ०१४ ॥

शौण्डिकाः कुक्कुराश्चैव शकाश्चैव विशां पते ।
अङ्गा वङ्गाश्च पुण्ड्राश्च शानवत्या गयास्तथा ॥ ०१५ ॥

सुजातयः श्रेणिमन्तः श्रेयांसः शस्त्रपाणयः ।
आहार्षुः क्षत्रिया वित्तं शतशोऽजातशत्रवे ॥ ०१६ ॥

वङ्गाः कलिङ्गपतयस्ताम्रलिप्ताः सपुण्ड्रकाः ।

दुकूलं कौशिकं चैव पत्रोर्णं प्रावरानपि ॥ ०१७ ॥

तत्र स्म द्वारपालैस्ते प्रोच्यन्ते राजशासनात् ।
कृतकाराः सुबलयस्ततो द्वारमवाप्स्यथ ॥ ०१८ ॥

ईषादन्तान्हेमकक्षान्पद्मवर्णान्कुथावृतान् ।
शैलाभान्नित्यमत्तांश्च अभितः काम्यकं सरः ॥ ०१९ ॥

दत्त्वैकैको दशशतान्कुञ्जरान्कवचावृतान् ।
क्षमावतः कुलीनांश्च द्वारेण प्राविशंस्ततः ॥ ०२० ॥

एते चान्ये च बहवो गणा दिग्भ्यः समागताः ।
अन्यैश्चोपाहृतान्यत्र रत्नानीह महात्मभिः ॥ ०२१ ॥

राजा चित्ररथो नाम गन्धर्वो वासवानुगः ।
शतानि चत्वार्यददद्धयानां वातरंहसाम् ॥ ०२२ ॥

तुम्बुरुस्तु प्रमुदितो गन्धर्वो वाजिनां शतम् ।
आम्रपत्रसवर्णानामददद्धेममालिनाम् ॥ ०२३ ॥

कृती तु राजा कौरव्य शूकराणां विशां पते ।
अददद्गजरत्नानां शतानि सुबहून्यपि ॥ ०२४ ॥

विराटेन तु मत्स्येन बल्यर्थं हेममालिनाम् ।
कुञ्जराणां सहस्रे द्वे मत्तानां समुपाहृते ॥ ०२५ ॥

पांशुराष्ट्राद्वसुदानो राजा षड्विंशतिं गजान् ।
अश्वानां च सहस्रे द्वे राजन्काञ्चनमालिनाम् ॥ ०२६ ॥

जवसत्त्वोपपन्नानां वयःस्थानां नराधिप ।
बलिं च कृत्स्नमादाय पाण्डवेभ्यो न्यवेदयत् ॥ ०२७ ॥

यज्ञसेनेन दासीनां सहस्राणि चतुर्दश ।
दासानामयुतं चैव सदाराणां विशां पते ॥ ०२८ ॥

गजयुक्ता महाराज रथाः षड्विंशतिस्तथा ।
राज्यं च कृत्स्नं पार्थेभ्यो यज्ञार्थं वै निवेदितम् ॥ ०२९ ॥

समुद्रसारं वैडूर्यं मुक्ताः शङ्खांस्तथैव च ।
शतशश्च कुथांस्तत्र सिंहलाः समुपाहरन् ॥ ०३० ॥

संवृता मणिचीरैस्तु श्यामास्ताम्रान्तलोचनाः ।
तान्गृहीत्वा नरास्तत्र द्वारि तिष्ठन्ति वारिताः ॥ ०३१ ॥

प्रीत्यर्थं ब्राह्मणाश्चैव क्षत्रियाश्च विनिर्जिताः ।
उपाजह्रुर्विशश्चैव शूद्राः शुश्रूषवोऽपि च ॥ ०३२ ॥

प्रीत्या च बहुमानाच्च अभ्यगच्छन्युधिष्ठिरम् ॥ ०३२ ॥

सर्वे म्लेच्छाः सर्ववर्णा आदिमध्यान्तजास्तथा ।
नानादेशसमुत्थैश्च नानाजातिभिरागतैः ॥ ०३३ ॥

पर्यस्त इव लोकोऽयं युधिष्ठिरनिवेशने ॥ ०३३ ॥

उच्चावचानुपग्राहान्राजभिः प्रहितान्बहून् ।
शत्रूणां पश्यतो दुःखान्मुमूर्षा मेऽद्य जायते ॥ ०३४ ॥

भृत्यास्तु ये पाण्डवानां तांस्ते वक्ष्यामि भारत ।
येषामामं च पक्वं च संविधत्ते युधिष्ठिरः ॥ ०३५ ॥

अयुतं त्रीणि पद्मानि गजारोहाः ससादिनः ।
रथानामर्बुदं चापि पादाता बहवस्तथा ॥ ०३६ ॥

प्रमीयमाणमारब्धं पच्यमानं तथैव च ।
विसृज्यमानं चान्यत्र पुण्याहस्वन एव च ॥ ०३७ ॥

नाभुक्तवन्तं नाहृष्टं नासुभिक्षं कथञ्चन ।
अपश्यं सर्ववर्णानां युधिष्ठिरनिवेशने ॥ ०३८ ॥

अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥ ०३९ ॥

सुप्रीताः परितुष्टाश्च तेऽप्याशंसन्त्यरिक्षयम् ॥ ०३९ ॥

दशान्यानि सहस्राणि यतीनामूर्ध्वरेतसाम् ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ०४० ॥

भुक्ताभुक्तं कृताकृतं सर्वमाकुब्जवामनम् ।
अभुञ्जाना याज्ञसेनी प्रत्यवैक्षद्विशां पते ॥ ०४१ ॥

द्वौ करं न प्रयच्छेतां कुन्तीपुत्राय भारत ।
वैवाहिकेन पाञ्चालाः सख्येनान्धकवृष्णयः ॥ ०४२ ॥

---

# अध्याय ०४९

दुर्योधन उवाच ॥

आर्यास्तु ये वै राजानः सत्यसंधा महाव्रताः ।
पर्याप्तविद्या वक्तारो वेदान्तावभृथाप्लुताः ॥ ००१ ॥

धृतिमन्तो ह्रीनिषेधा धर्मात्मानो यशस्विनः ।
मूर्धाभिषिक्तास्ते चैनं राजानः पर्युपासते ॥ ००२ ॥

दक्षिणार्थं समानीता राजभिः कांस्यदोहनाः ।
आरण्या बहुसाहस्रा अपश्यं तत्र तत्र गाः ॥ ००३ ॥

आजह्रुस्तत्र सत्कृत्य स्वयमुद्यम्य भारत ।
अभिषेकार्थमव्यग्रा भाण्डमुच्चावचं नृपाः ॥ ००४ ॥

बाह्लीको रथमाहार्षीज्जाम्बूनदपरिष्कृतम् ।
सुदक्षिणस्तं युयुजे श्वेतैः काम्बोजजैर्हयैः ॥ ००५ ॥

सुनीथोऽप्रतिमं तस्य अनुकर्षं महायशाः ।
ध्वजं चेदिपतिः क्षिप्रमहार्षीत्स्वयमुद्यतम् ॥ ००६ ॥

दाक्षिणात्यः संनहनं स्रगुष्णीषे च मागधः ।
वसुदानो महेष्वासो गजेन्द्रं षष्टिहायनम् ॥ ००७ ॥

मत्स्यस्त्वक्षानवाबध्नादेकलव्य उपानहौ ।
आवन्त्यस्त्वभिषेकार्थमापो बहुविधास्तथा ॥ ००८ ॥

चेकितान उपासङ्गं धनुः काश्य उपाहरत् ।
असिं रुक्मत्सरुं शल्यः शैक्यं काञ्चनभूषणम् ॥ ००९ ॥

अभ्यषिञ्चत्ततो धौम्यो व्यासश्च सुमहातपाः ।
नारदं वै पुरस्कृत्य देवलं चासितं मुनिम् ॥ ०१० ॥

प्रीतिमन्त उपातिष्ठन्नभिषेकं महर्षयः ।
जामदग्न्येन सहितास्तथान्ये वेदपारगाः ॥ ०११ ॥

अभिजग्मुर्महात्मानं मन्त्रवद्भूरिदक्षिणम् ।
महेन्द्रमिव देवेन्द्रं दिवि सप्तर्षयो यथा ॥ ०१२ ॥

अधारयच्छत्रमस्य सात्यकिः सत्यविक्रमः ।
धनञ्जयश्च व्यजने भीमसेनश्च पाण्डवः ॥ ०१३ ॥

उपागृह्णाद्यमिन्द्राय पुराकल्पे प्रजापतिः ।
तमस्मै शङ्खमाहार्षीद्वारुणं कलशोदधिः ॥ ०१४ ॥

सिक्तं निष्कसहस्रेण सुकृतं विश्वकर्मणा ।
तेनाभिषिक्तः कृष्णेन तत्र मे कश्मलोऽभवत् ॥ ०१५ ॥

गच्छन्ति पूर्वादपरं समुद्रं चापि दक्षिणम् ।
उत्तरं तु न गच्छन्ति विना तात पतत्रिभिः ॥ ०१६ ॥

तत्र स्म दध्मुः शतशः शङ्खान्मङ्गल्यकारणात् ।
प्राणदंस्ते समाध्मातास्तत्र रोमाणि मेऽहृषन् ॥ ०१७ ॥

प्रणता भूमिपाश्चापि पेतुर्हीनाः स्वतेजसा ।
धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः ॥ ०१८ ॥

सत्त्वस्थाः शौर्यसंपन्ना अन्योन्यप्रियकारिणः ।
विसञ्ज्ञान्भूमिपान्दृष्ट्वा मां च ते प्राहसंस्तदा ॥ ०१९ ॥

ततः प्रहृष्टो बीभत्सुः प्रादाद्धेमविषाणिनाम् ।
शतान्यनडुहां पञ्च द्विजमुख्येषु भारत ॥ ०२० ॥

नैवं शम्बरहन्ताभूद्यौवनाश्वो मनुर्न च ।
न च राजा पृथुर्वैन्यो न चाप्यासीद्भगीरथः ॥ ०२१ ॥

यथातिमात्रं कौन्तेयः श्रिया परमया युतः ।

राजसूयमवाप्यैवं हरिश्चन्द्र इव प्रभुः ॥ ०२२ ॥

एतां दृष्ट्वा श्रियं पार्थे हरिश्चन्द्रे यथा विभो ।
कथं नु जीवितं श्रेयो मम पश्यसि भारत ॥ ०२३ ॥

अन्धेनेव युगं नद्धं विपर्यस्तं नराधिप ।
कनीयांसो विवर्धन्ते ज्येष्ठा हीयन्ति भारत ॥ ०२४ ॥

एवं दृष्ट्वा नाभिविन्दामि शर्म ; परीक्षमाणोऽपि कुरुप्रवीर ।
तेनाहमेवं कृशतां गतश्च ; विवर्णतां चैव सशोकतां च ॥ ०२५ ॥

---

# अध्याय ०५०

धृतराष्ट्र उवाच ॥

त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्र मा पाण्डवान्द्विषः ।
द्वेष्टा ह्यसुखमादत्ते यथैव निधनं तथा ॥ ००१ ॥

अव्युत्पन्नं समानार्थं तुल्यमित्रं युधिष्ठिरम् ।
अद्विषन्तं कथं द्विष्यात्त्वादृशो भरतर्षभ ॥ ००२ ॥

तुल्याभिजनवीर्यश्च कथं भ्रातुः श्रियं नृप ।
पुत्र कामयसे मोहान्मैवं भूः शाम्य साध्विह ॥ ००३ ॥

अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ ।
ऋत्विजस्तव तन्वन्तु सप्ततन्तुं महाध्वरम् ॥ ००४ ॥

आहरिष्यन्ति राजानस्तवापि विपुलं धनम् ।
प्रीत्या च बहुमानाच्च रत्नान्याभरणानि च ॥ ००५ ॥

अनर्थाचरितं तात परस्वस्पृहणं भृशम् ।
स्वसंतुष्टः स्वधर्मस्थो यः स वै सुखमेधते ॥ ००६ ॥

अव्यापारः परार्थेषु नित्योद्योगः स्वकर्मसु ।
उद्यमो रक्षणे स्वेषामेतद्वैभवलक्षणम् ॥ ००७ ॥

विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान्नरः ।
अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥ ००८ ॥

अन्तर्वेद्यां ददद्वित्तं कामाननुभवन्प्रियान् ।
क्रीडन्स्त्रीभिर्निरातङ्कः प्रशाम्य भरतर्षभ ॥ ००९ ॥

दुर्योधन उवाच ॥

जानन्वै मोहयसि मां नावि नौरिव संयता ।
स्वार्थे किं नावधानं ते उताहो द्वेष्टि मां भवान् ॥ ०१० ॥

न सन्तीमे धार्तराष्ट्रा येषां त्वमनुशासिता ।
भविष्यमर्थमाख्यासि सदा त्वं कृत्यमात्मनः ॥ ०११ ॥

परप्रणेयोऽग्रणीर्हि यश्च मार्गात्प्रमुह्यति ।
पन्थानमनुगच्छेयुः कथं तस्य पदानुगाः ॥ ०१२ ॥

राजन्परिगतप्रज्ञो वृद्धसेवी जितेन्द्रियः ।
प्रतिपन्नान्स्वकार्येषु संमोहयसि नो भृशम् ॥ ०१३ ॥

लोकवृत्ताद्राजवृत्तमन्यदाह बृहस्पतिः ।
तस्माद्राज्ञा प्रयत्नेन स्वार्थश्चिन्त्यः सदैव हि ॥ ०१४ ॥

क्षत्रियस्य महाराज जये वृत्तिः समाहिता ।
स वै धर्मोऽस्त्वधर्मो वा स्ववृत्तौ भरतर्षभ ॥ ०१५ ॥

प्रकालयेद्दिशः सर्वाः प्रतोदेनेव सारथिः ।
प्रत्यमित्रश्रियं दीप्तां बुभूषुर्भरतर्षभ ॥ ०१६ ॥

प्रच्छन्नो वा प्रकाशो वा यो योगो रिपुबान्धनः ।
तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम् ॥ ०१७ ॥

असंतोषः श्रियो मूलं तस्मात्तं कामयाम्यहम् ।
समुच्छ्रये यो यतते स राजन्परमो नयी ॥ ०१८ ॥

ममत्वं हि न कर्तव्यमैश्वर्ये वा धनेऽपि वा ।
पूर्वावाप्तं हरन्त्यन्ये राजधर्मं हि तं विदुः ॥ ०१९ ॥

अद्रोहे समयं कृत्वा चिच्छेद नमुचेः शिरः ।
शक्रः सा हि मता तस्य रिपौ वृत्तिः सनातनी ॥ ०२० ॥

द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ०२१ ॥

नास्ति वै जातितः शत्रुः पुरुषस्य विशां पते ।
येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः ॥ ०२२ ॥

शत्रुपक्षं समृध्यन्तं यो मोहात्समुपेक्षते ।
व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः ॥ ०२३ ॥

अल्पोऽपि ह्यरिरत्यन्तं वर्धमानपराक्रमः ।
वल्मीको मूलज इव ग्रसते वृक्षमन्तिकात् ॥ ०२४ ॥

आजमीढ रिपोर्लक्ष्मीर्मा ते रोचिष्ट भारत ।
एष भारः सत्त्ववतां नयः शिरसि धिष्ठितः ॥ ०२५ ॥

जन्मवृद्धिमिवार्थानां यो वृद्धिमभिकाङ्क्षते ।
एधते ज्ञातिषु स वै सद्योवृद्धिर्हि विक्रमः ॥ ०२६ ॥

नाप्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति ।
अवाप्स्ये वा श्रियं तां हि शेष्ये वा निहतो युधि ॥ ०२७ ॥

अतादृशस्य किं मेऽद्य जीवितेन विशां पते ।
वर्धन्ते पाण्डवा नित्यं वयं तु स्थिरवृद्धयः ॥ ०२८ ॥

---

# अध्याय ०५१

शकुनिरुवाच ॥

यां त्वमेतां श्रियं दृष्ट्वा पाण्डुपुत्रे युधिष्ठिरे ।
तप्यसे तां हरिष्यामि द्यूतेनाहूयतां परः ॥ ००१ ॥

अगत्वा संशयमहमयुद्ध्वा च चमूमुखे ।
अक्षान्क्षिपन्नक्षतः सन्विद्वानविदुषो जये ॥ ००२ ॥

ग्लहान्धनूंषि मे विद्धि शरानक्षांश्च भारत ।
अक्षाणां हृदयं मे ज्यां रथं विद्धि ममास्तरम् ॥ ००३ ॥

दुर्योधन उवाच ॥

अयमुत्सहते राजञ्श्रियमाहर्तुमक्षवित् ।

द्यूतेन पाण्डुपुत्रेभ्यस्तत्तुभ्यं तात रोचताम् ॥ ००४ ॥

धृतराष्ट्र उवाच ॥

स्थितोऽस्मि शासने भ्रातुर्विदुरस्य महात्मनः ।
तेन सङ्गम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ॥ ००५ ॥

दुर्योधन उवाच ॥

विहनिष्यति ते बुद्धिं विदुरो मुक्तसंशयः ।
पाण्डवानां हिते युक्तो न तथा मम कौरव ॥ ००६ ॥

नारभेत्परसामर्थ्यात्पुरुषः कार्यमात्मनः ।
मतिसाम्यं द्वयोर्नास्ति कार्येषु कुरुनन्दन ॥ ००७ ॥

भयं परिहरन्मन्द आत्मानं परिपालयन् ।
वर्षासु क्लिन्नकटवत्तिष्ठन्नेवावसीदति ॥ ००८ ॥

न व्याधयो नापि यमः श्रेयःप्राप्तिं प्रतीक्षते ।
यावदेव भवेत्कल्पस्तावच्छ्रेयः समाचरेत् ॥ ००९ ॥

धृतराष्ट्र उवाच ॥

सर्वथा पुत्र बलिभिर्विग्रहं ते न रोचये ।
वैरं विकारं सृजति तद्वै शस्त्रमनायसम् ॥ ०१० ॥

अनर्थमर्थं मन्यसे राजपुत्र ; सङ्ग्रन्थनं कलहस्यातिघोरम् ।
तद्वै प्रवृत्तं तु यथा कथं चि ;द्विमोक्षयेच्चाप्यसिसायकांश्च ॥ ०११ ॥

दुर्योधन उवाच ॥

द्यूते पुराणैर्व्यवहारः प्रणीत ;स्तत्रात्ययो नास्ति न संप्रहारः ।
तद्रोचतां शकुनेर्वाक्यमद्य ; सभां क्षिप्रं त्वमिहाज्ञापयस्व ॥ ०१२ ॥

स्वर्गद्वारं दीव्यतां नो विशिष्टं ; तद्वर्तिनां चापि तथैव युक्तम् ।
भवेदेवं ह्यात्मना तुल्यमेव ; दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥ ०१३ ॥

धृतराष्ट्र उवाच ॥

वाक्यं न मे रोचते यत्त्वयोक्तं ; यत्ते प्रियं तत्क्रियतां नरेन्द्र ।
पश्चात्तप्स्यसे तदुपाक्रम्य वाक्यं ; न हीदृशं भावि वचो हि धर्म्यम् ॥ ०१४ ॥

दृष्टं ह्येतद्विदुरेणैवमेव ; सर्वं पूर्वं बुद्धिविद्यानुगेन ।
तदेवैतदवशस्याभ्युपैति ; महद्भयं क्षत्रियबीजघाति ॥ ०१५ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा धृतराष्ट्रो मनीषी ; दैवं मत्वा परमं दुस्तरं च ।
शशासोच्चैः पुरुषान्पुत्रवाक्ये ; स्थितो राजा दैवसंमूढचेताः ॥ ०१६ ॥

सहस्रस्तम्भां हेमवैडूर्यचित्रां ; शतद्वारां तोरणस्फाटिशृङ्गाम् ।
सभामग्र्यां क्रोशमात्रायतां मे ; तद्विस्तारामाशु कुर्वन्तु युक्ताः ॥ ०१७ ॥

श्रुत्वा तस्य त्वरिता निर्विशङ्काः ; प्राज्ञा दक्षास्तां तथा चक्रुराशु ।
सर्वद्रव्याण्युपजह्रुः सभायां ; सहस्रशः शिल्पिनश्चापि युक्ताः ॥ ०१८ ॥

कालेनाल्पेनाथ निष्ठां गतां तां ; सभां रम्यां बहुरत्नां विचित्राम् ।
चित्रैर्हैमैरासनैरभ्युपेता ;माचख्युस्ते तस्य राज्ञः प्रतीताः ॥ ०१९ ॥

ततो विद्वान्विदुरं मन्त्रिमुख्य ;मुवाचेदं धृतराष्ट्रो नरेन्द्रः ।
युधिष्ठिरं राजपुत्रं हि गत्वा ; मद्वाक्येन क्षिप्रमिहानयस्व ॥ ०२० ॥

सभेयं मे बहुरत्ना विचित्रा ; शय्यासनैरुपपन्ना महार्हैः ।
सा दृश्यतां भ्रातृभिः सार्धमेत्य ; सुहृद्द्यूतं वर्ततामत्र चेति ॥ ०२१ ॥

मतमाज्ञाय पुत्रस्य धृतराष्ट्रो नराधिपः ।
मत्वा च दुस्तरं दैवमेतद्राजा चकार ह ॥ ०२२ ॥

अन्यायेन तथोक्तस्तु विदुरो विदुषां वरः ।
नाभ्यनन्दद्वचो भ्रातुर्वचनं चेदमब्रवीत् ॥ ०२३ ॥

नाभिनन्दामि नृपते प्रैषमेतं ; मैवं कृथाः कुलनाशाद्बिभेमि ।
पुत्रैर्भिन्नैः कलहस्ते ध्रुवं स्या ;देतच्छङ्के द्यूतकृते नरेन्द्र ॥ ०२४ ॥

धृतराष्ट्र उवाच ॥

नेह क्षत्तः कलहस्तप्स्यते मां ; न चेद्दैवं प्रतिलोमं भविष्यत् ।
धात्रा तु दिष्टस्य वशे किलेदं ; सर्वं जगच्चेष्टति न स्वतन्त्रम् ॥ ०२५ ॥

तदद्य विदुर प्राप्य राजानं मम शासनात् ।
क्षिप्रमानय दुर्धर्षं कुन्तीपुत्रं युधिष्ठिरम् ॥ ०२६ ॥

---

# अध्याय ०५२

वैशंपायन उवाच ॥

ततः प्रायाद्विदुरोऽश्वैरुदारै ;र्महाजवैर्बलिभिः साधुदान्तैः ।
बलान्नियुक्तो धृतराष्ट्रेण राज्ञा ; मनीषिणां पाण्डवानां सकाशम् ॥ ००१ ॥

सोऽभिपत्य तदध्वानमासाद्य नृपतेः पुरम् ।
प्रविवेश महाबुद्धिः पूज्यमानो द्विजातिभिः ॥ ००२ ॥

स राजगृहमासाद्य कुबेरभवनोपमम् ।
अभ्यगच्छत धर्मात्मा धर्मपुत्रं युधिष्ठिरम् ॥ ००३ ॥

तं वै राजा सत्यधृतिर्महात्मा ; अजातशत्रुर्विदुरं यथावत् ।
पूजापूर्वं प्रतिगृह्याजमीढ ;स्ततोऽपृच्छद्धृतराष्ट्रं सपुत्रम् ॥ ००४ ॥

युधिष्ठिर उवाच ॥

विज्ञायते ते मनसो न प्रहर्षः ; कच्चित्क्षत्तः कुशलेनागतोऽसि ।
कच्चित्पुत्राः स्थविरस्यानुलोमा ; वशानुगाश्चापि विशोऽपि कच्चित् ॥ ००५ ॥

विदुर उवाच ॥

राजा महात्मा कुशली सपुत्र ; आस्ते वृतो ज्ञातिभिरिन्द्रकल्पैः ।
प्रीतो राजन्पुत्रगणैर्विनीतै ;र्विशोक एवात्मरतिर्दृढात्मा ॥ ००६ ॥

इदं तु त्वां कुरुराजोऽभ्युवाच ; पूर्वं पृष्ट्वा कुशलं चाव्ययं च ।
इयं सभा त्वत्सभातुल्यरूपा ; भ्रातॄणां ते पश्य तामेत्य पुत्र ॥ ००७ ॥

समागम्य भ्रातृभिः पार्थ तस्यां ; सुहृद्द्यूतं क्रियतां रम्यतां च ।
प्रीयामहे भवतः सङ्गमेन ; समागताः कुरवश्चैव सर्वे ॥ ००८ ॥

दुरोदरा विहिता ये तु तत्र ; महात्मना धृतराष्ट्रेण राज्ञा ।
तान्द्रक्ष्यसे कितवान्संनिविष्टा ;न्नित्यागतोऽहं नृपते तज्जुषस्व ॥ ००९ ॥

युधिष्ठिर उवाच ॥

द्यूते क्षत्तः कलहो विद्यते नः ; को वै द्यूतं रोचयेद्बुध्यमानः ।

किं वा भवान्मन्यते युक्तरूपं ; भवद्वाक्ये सर्व एव स्थिताः स्म ॥ ०१० ॥

विदुर उवाच ॥

जानाम्यहं द्यूतमनर्थमूलं ; कृतश्च यत्नोऽस्य मया निवारणे ।
राजा तु मां प्राहिणोत्त्वत्सकाशं ; श्रुत्वा विद्वञ्श्रेय इहाचरस्व ॥ ०११ ॥

युधिष्ठिर उवाच ॥

के तत्रान्ये कितवा दीव्यमाना ; विना राज्ञो धृतराष्ट्रस्य पुत्रैः ।
पृच्छामि त्वां विदुर ब्रूहि नस्ता ;न्यैर्दीव्यामः शतशः संनिपत्य ॥ ०१२ ॥

विदुर उवाच ॥

गान्धारराजः शकुनिर्विशां पते ; राजातिदेवी कृतहस्तो मताक्षः ।
विविंशतिश्चित्रसेनश्च राजा ; सत्यव्रतः पुरुमित्रो जयश्च ॥ ०१३ ॥

युधिष्ठिर उवाच ॥

महाभयाः कितवाः संनिविष्टा ; मायोपधा देवितारोऽत्र सन्ति ।
धात्रा तु दिष्टस्य वशे किलेदं ; नादेवनं कितवैरद्य तैर्मे ॥ ०१४ ॥

नाहं राज्ञो धृतराष्ट्रस्य शासना ;न्न गन्तुमिच्छामि कवे दुरोदरम् ।
इष्टो हि पुत्रस्य पिता सदैव ; तदस्मि कर्ता विदुरात्थ मां यथा ॥ ०१५ ॥

न चाकामः शकुनिना देविताहं ; न चेन्मां धृष्णुराह्वयिता सभायाम् ।
आहूतोऽहं न निवर्ते कदा चि ;त्तदाहितं शाश्वतं वै व्रतं मे ॥ ०१६ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा विदुरं धर्मराजः ; प्रायात्रिकं सर्वमाज्ञाप्य तूर्णम् ।

प्रायाच्छ्वोभूते सगणः सानुयात्रः ; सह स्त्रीभिर्द्रौपदीमादिकृत्वा ॥ ०१७ ॥

दैवं प्रज्ञां तु मुष्णाति तेजश्चक्षुरिवापतत् ।
धातुश्च वशमन्वेति पाशैरिव नरः सितः ॥ ०१८ ॥

इत्युक्त्वा प्रययौ राजा सह क्षत्त्रा युधिष्ठिरः ।
अमृष्यमाणस्तत्पार्थः समाह्वानमरिंदमः ॥ ०१९ ॥

बाह्लिकेन रथं दत्तमास्थाय परवीरहा ।
परिच्छन्नो ययौ पार्थो भ्रातृभिः सह पाण्डवः ॥ ०२० ॥

राजश्रिया दीप्यमानो ययौ ब्रह्मपुरःसरः ।
धृतराष्ट्रेण चाहूतः कालस्य समयेन च ॥ ०२१ ॥

स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ ।
समियाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः ॥ ०२२ ॥

तथा द्रोणेन भीष्मेण कर्णेन च कृपेण च ।
समियाय यथान्यायं द्रौणिना च विभुः सह ॥ ०२३ ॥

समेत्य च महाबाहुः सोमदत्तेन चैव ह ।
दुर्योधनेन शल्येन सौबलेन च वीर्यवान् ॥ ०२४ ॥

ये चान्ये तत्र राजानः पूर्वमेव समागताः ।
जयद्रथेन च तथा कुरुभिश्चापि सर्वशः ॥ ०२५ ॥

ततः सर्वैर्महाबाहुर्भ्रातृभिः परिवारितः ।
प्रविवेश गृहं राज्ञो धृतराष्ट्रस्य धीमतः ॥ ०२६ ॥

ददर्श तत्र गान्धारीं देवीं पतिमनुव्रताम् ।
स्नुषाभिः संवृतां शश्वत्ताराभिरिव रोहिणीम् ॥ ०२७ ॥

अभिवाद्य स गान्धारीं तया च प्रतिनन्दितः ।
ददर्श पितरं वृद्धं प्रज्ञाचक्षुषमीश्वरम् ॥ ०२८ ॥

राज्ञा मूर्धन्युपाघ्रातास्ते च कौरवनन्दनाः ।
चत्वारः पाण्डवा राजन्भीमसेनपुरोगमाः ॥ ०२९ ॥

ततो हर्षः समभवत्कौरवाणां विशां पते ।
तान्दृष्ट्वा पुरुषव्याघ्रान्पाण्डवान्प्रियदर्शनान् ॥ ०३० ॥

विविशुस्तेऽभ्यनुज्ञाता रत्नवन्ति गृहाण्यथ ।
ददृशुश्चोपयातास्तान्द्रौपदीप्रमुखाः स्त्रियः ॥ ०३१ ॥

याज्ञसेन्याः परामृद्धिं दृष्ट्वा प्रज्वलितामिव ।
स्नुषास्ता धृतराष्ट्रस्य नातिप्रमनसोऽभवन् ॥ ०३२ ॥

ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिस्तु संविदम् ।
कृत्वा व्यायामपूर्वाणि कृत्यानि प्रतिकर्म च ॥ ०३३ ॥

ततः कृताह्निकाः सर्वे दिव्यचन्दनरूषिताः ।
कल्याणमनसश्चैव ब्राह्मणान्स्वस्ति वाच्य च ॥ ०३४ ॥

मनोज्ञमशनं भुक्त्वा विविशुः शरणान्यथ ।
उपगीयमाना नारीभिरस्वपन्कुरुनन्दनाः ॥ ०३५ ॥

जगाम तेषां सा रात्रिः पुण्या रतिविहारिणाम् ।
स्तूयमानाश्च विश्रान्ताः काले निद्रामथात्यजन् ॥ ०३६ ॥

सुखोषितास्तां रजनीं प्रातः सर्वे कृताह्निकाः ।
सभां रम्यां प्रविविशुः कितवैरभिसंवृताम् ॥ ०३७ ॥

# अध्याय ०५३

शकुनिरुवाच ॥

उपस्तीर्णा सभा राजन्रन्तुं चैते कृतक्षणाः ।
अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर ॥ ००१ ॥

युधिष्ठिर उवाच ॥

निकृतिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः ।
न च नीतिर्ध्रुवा राजन्किं त्वं द्यूतं प्रशंससि ॥ ००२ ॥

न हि मानं प्रशंसन्ति निकृतौ कितवस्य ह ।
शकुने मैव नो जैषीरमार्गेण नृशंसवत् ॥ ००३ ॥

शकुनिरुवाच ॥

योऽन्वेति संख्यां निकृतौ विधिज्ञ ;श्चेष्टास्वखिन्नः कितवोऽक्षजासु ।
महामतिर्यश्च जानाति द्यूतं ; स वै सर्वं सहते प्रक्रियासु ॥ ००४ ॥

अक्षग्लहः सोऽभिभवेत्परं न ;स्तेनैव कालो भवतीदमात्थ ।
दीव्यामहे पार्थिव मा विशङ्कां ; कुरुष्व पाणं च चिरं च मा कृथाः ॥ ००५ ॥

युधिष्ठिर उवाच ॥

एवमाहायमसितो देवलो मुनिसत्तमः ।
इमानि लोकद्वाराणि यो वै सञ्चरते सदा ॥ ००६ ॥

इदं वै देवनं पापं मायया कितवैः सह ।
धर्मेण तु जयो युद्धे तत्परं साधु देवनम् ॥ ००७ ॥

नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत ।
अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतम् ॥ ००८ ॥

शक्तितो ब्राह्मणान्वन्द्याञ्शिक्षितुं प्रयतामहे ।
तद्वै वित्तं मातिदेवीर्मा जैषीः शकुने परम् ॥ ००९ ॥

नाहं निकृत्या कामये सुखान्युत धनानि वा ।
कितवस्याप्यनिकृतेर्वृत्तमेतन्न पूज्यते ॥ ०१० ॥

शकुनिरुवाच ॥

श्रोत्रियोऽश्रोत्रियमुत निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ ०११ ॥

एवं त्वं मामिहाभ्येत्य निकृतिं यदि मन्यसे ।
देवनाद्विनिवर्तस्व यदि ते विद्यते भयम् ॥ ०१२ ॥

युधिष्ठिर उवाच ॥

आहूतो न निवर्तेयमिति मे व्रतमाहितम् ।
विधिश्च बलवान्राजन्दिष्टस्यास्मि वशे स्थितः ॥ ०१३ ॥

अस्मिन्समागमे केन देवनं मे भविष्यति ।
प्रतिपाणश्च कोऽन्योऽस्ति ततो द्यूतं प्रवर्तताम् ॥ ०१४ ॥

दुर्योधन उवाच ॥

अहं दातास्मि रत्नानां धनानां च विशां पते ।

मदर्थे देविता चायं शकुनिर्मातुलो मम ॥ ०१५ ॥

युधिष्ठिर उवाच ॥

अन्येनान्यस्य विषमं देवनं प्रतिभाति मे ।
एतद्विद्वन्नुपादत्स्व काममेवं प्रवर्तताम् ॥ ०१६ ॥

वैशंपायन उवाच ॥

उपोह्यमाने द्यूते तु राजानः सर्व एव ते ।
धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां ततः ॥ ०१७ ॥

भीष्मो द्रोणः कृपश्चैव विदुरश्च महामतिः ।
नातीवप्रीतमनसस्तेऽन्ववर्तन्त भारत ॥ ०१८ ॥

ते द्वंद्वशः पृथक्चैव सिंहग्रीवा महौजसः ।
सिंहासनानि भूरीणि विचित्राणि च भेजिरे ॥ ०१९ ॥

शुशुभे सा सभा राजन्राजभिस्तैः समागतैः ।
देवैरिव महाभागैः समवेतैस्त्रिविष्टपम् ॥ ०२० ॥

सर्वे वेदविदः शूराः सर्वे भास्वरमूर्तयः ।
प्रावर्तत महाराज सुहृद्द्यूतमनन्तरम् ॥ ०२१ ॥

युधिष्ठिर उवाच ॥

अयं बहुधनो राजन्सागरावर्तसंभवः ।
मणिर्हारोत्तरः श्रीमान्कनकोत्तमभूषणः ॥ ०२२ ॥

एतद्राजन्धनं मह्यं प्रतिपाणस्तु कस्तव ।
भवत्वेष क्रमस्तात जयाम्येनं दुरोदरम् ॥ ०२३ ॥

दुर्योधन उवाच ॥

सन्ति मे मणयश्चैव धनानि विविधानि च ।
मत्सरश्च न मेऽर्थेषु जयाम्येनं दुरोदरम् ॥ ०२४ ॥

वैशंपायन उवाच ॥

ततो जग्राह शकुनिस्तानक्षानक्षतत्त्ववित् ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२५ ॥

---

# अध्याय ०५४

युधिष्ठिर उवाच ॥

मत्तः कैतवकेनैव यज्जितोऽस्मि दुरोदरम् ।
शकुने हन्त दीव्यामो ग्लहमानाः सहस्रशः ॥ ००१ ॥

इमे निष्कसहस्रस्य कुण्डिनो भरिताः शतम् ।
कोशो हिरण्यमक्षय्यं जातरूपमनेकशः ॥ ००२ ॥

एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ००२ ॥

वैशंपायन उवाच ॥

इत्युक्तः शकुनिः प्राह जितमित्येव तं नृपम् ।
युधिष्ठिर उवाच ॥

अयं सहस्रसमितो वैयाघ्रः सुप्रवर्तितः ।
सुचक्रोपस्करः श्रीमान्किङ्किणीजालमण्डितः ॥ ००४ ॥

संह्लादनो राजरथो य इहास्मानुपावहत् ।
जैत्रो रथवरः पुण्यो मेघसागरनिःस्वनः ॥ ००५ ॥

अष्टौ यं कुररच्छायाः सदश्वा राष्ट्रसंमताः ।
वहन्ति नैषामुच्येत पदा भूमिमुपस्पृशन् ॥ ००६ ॥

एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ००६ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ००७ ॥

युधिष्ठिर उवाच ॥

सहस्रसंख्या नागा मे मत्तास्तिष्ठन्ति सौबल ।
हेमकक्षाः कृतापीडाः पद्मिनो हेममालिनः ॥ ००८ ॥

सुदान्ता राजवहनाः सर्वशब्दक्षमा युधि ।
ईषादन्ता महाकायाः सर्वे चाष्टकरेणवः ॥ ००९ ॥

सर्वे च पुरभेत्तारो नगमेघनिभा गजाः ।
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ०१० ॥

वैशंपायन उवाच ॥

तमेवंवादिनं पार्थं प्रहसन्निव सौबलः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०११ ॥

युधिष्ठिर उवाच ॥

शतं दासीसहस्राणि तरुण्यो मे प्रभद्रिकाः ।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः ॥ ०१२ ॥

महार्हमाल्याभरणाः सुवस्त्राश्चन्दनोक्षिताः ।
मणीन्हेम च बिभ्रत्यः सर्वा वै सूक्ष्मवाससः ॥ ०१३ ॥

अनुसेवां चरन्तीमाः कुशला नृत्यसामसु ।
स्नातकानाममात्यानां राज्ञां च मम शासनात् ॥ ०१४ ॥

एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ०१४ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०१५ ॥

युधिष्ठिर उवाच ॥

एतावन्त्येव दासानां सहस्राण्युत सन्ति मे ।
प्रदक्षिणानुलोमाश्च प्रावारवसनाः सदा ॥ ०१६ ॥

प्राज्ञा मेधाविनो दक्षा युवानो मृष्टकुण्डलाः ।
पात्रीहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ॥ ०१७ ॥

एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ०१७ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

रथास्तावन्त एवेमे हेमभाण्डाः पताकिनः ।
हयैर्विनीतैः संपन्ना रथिभिश्चित्रयोधिभिः ॥ ०१९ ॥

एकैको यत्र लभते सहस्रपरमां भृतिम् ।
युध्यतोऽयुध्यतो वापि वेतनं मासकालिकम् ॥ ०२० ॥

एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ०२० ॥

वैशंपायन उवाच ॥

इत्येवमुक्ते पार्थेन कृतवैरो दुरात्मवान् ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२१ ॥

युधिष्ठिर उवाच ॥

अश्वांस्तित्तिरिकल्माषान्गान्धर्वान्हेममालिनः ।
ददौ चित्ररथस्तुष्टो यांस्तान्गाण्डीवधन्वने ॥ ०२२ ॥

एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ०२२ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२३ ॥

युधिष्ठिर उवाच ॥

रथानां शकटानां च हयानां चायुतानि मे ।
युक्तानामेव तिष्ठन्ति वाहैरुच्चावचैर्वृताः ॥ ०२४ ॥

एवं वर्णस्य वर्णस्य समुच्चीय सहस्रशः ।
क्षीरं पिबन्तस्तिष्ठन्ति भुञ्जानाः शालितण्डुलान् ॥ ०२५ ॥

षष्टिस्तानि सहस्राणि सर्वे पृथुलवक्षसः ।
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ०२६ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२७ ॥

युधिष्ठिर उवाच ॥

ताम्रलोहैः परिवृता निधयो मे चतुःशताः ।
पञ्चद्रौणिक एकैकः सुवर्णस्याहतस्य वै ॥ ०२८ ॥

एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ०२८ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२९ ॥

# अध्याय ०५५

विदुर उवाच ॥

महाराज विजानीहि यत्त्वां वक्ष्यामि तच्छृणु ।
मुमूर्षोरौषधमिव न रोचेतापि ते श्रुतम् ॥ ००१ ॥

यद्वै पुरा जातमात्रो रुराव ; गोमायुवद्विस्वरं पापचेताः ।
दुर्योधनो भारतानां कुलघ्नः ; सोऽयं युक्तो भविता कालहेतुः ॥ ००२ ॥

गृहे वसन्तं गोमायुं त्वं वै मत्वा न बुध्यसे ।
दुर्योधनस्य रूपेण शृणु काव्यां गिरं मम ॥ ००३ ॥

मधु वै माध्विको लब्ध्वा प्रपातं नावबुध्यते ।
आरुह्य तं मज्जति वा पतनं वाधिगच्छति ॥ ००४ ॥

सोऽयं मत्तोऽक्षदेवेन मधुवन्न परीक्षते ।
प्रपातं बुध्यते नैव वैरं कृत्वा महारथैः ॥ ००५ ॥

विदितं ते महाराज राजस्वेवासमञ्जसम् ।
अन्धका यादवा भोजाः समेताः कंसमत्यजन् ॥ ००६ ॥

नियोगाच्च हते तस्मिन्कृष्णेनामित्रघातिना ।
एवं ते ज्ञातयः सर्वे मोदमानाः शतं समाः ॥ ००७ ॥

त्वन्नियुक्तः सव्यसाची निगृह्णातु सुयोधनम् ।
निग्रहादस्य पापस्य मोदन्तां कुरवः सुखम् ॥ ००८ ॥

काकेनेमांश्चित्रबर्हाञ्शार्दूलान्क्रोष्टुकेन च ।
क्रीणीष्व पाण्डवान्राजन्मा मज्जीः शोकसागरे ॥ ००९ ॥

त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ०१० ॥

सर्वज्ञः सर्वभावज्ञः सर्वशत्रुभयङ्करः ।
इति स्म भाषते काव्यो जम्भत्यागे महासुरान् ॥ ०११ ॥

हिरण्यष्ठीविनः कश्चित्पक्षिणो वनगोचरान् ।
गृहे किल कृतावासा.ण्लोभाद्राजन्नपीडयत् ॥ ०१२ ॥

सदोपभोज्या.ण्लोभान्धो हिरण्यार्थे परंतप ।
आयतिं च तदात्वं च उभे सद्यो व्यनाशयत् ॥ ०१३ ॥

तदात्वकामः पाण्डूंस्त्वं मा द्रुहो भरतर्षभ ।
मोहात्मा तप्यसे पश्चात्पक्षिहा पुरुषो यथा ॥ ०१४ ॥

जातं जातं पाण्डवेभ्यः पुष्पमादत्स्व भारत ।
मालाकार इवारामे स्नेहं कुर्वन्पुनः पुनः ॥ ०१५ ॥

वृक्षानङ्गारकारीव मैनान्धाक्षीः समूलकान् ।
मा गमः ससुतामात्यः सबलश्च पराभवम् ॥ ०१६ ॥

समवेतान्हि कः पार्थान्प्रतियुध्येत भारत ।
मरुद्भिः सहितो राजन्नपि साक्षान्मरुत्पतिः ॥ ०१७ ॥

---

# अध्याय ०५६

विदुर उवाच ॥

द्यूतं मूलं कलहस्यानुपाति ; मिथोभेदाय महते वा रणाय ।
यदास्थितोऽयं धृतराष्ट्रस्य पुत्रो ; दुर्योधनः सृजते वैरमुग्रम् ॥ ००१ ॥

प्रातिपीयाः शांतनवा भैमसेनाः सबाह्लिकाः ।
दुर्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्वशः ॥ ००२ ॥

दुर्योधनो मदेनैव क्षेमं राष्ट्रादपोहति ।
विषाणं गौरिव मदात्स्वयमारुजते बलात् ॥ ००३ ॥

यश्चित्तमन्वेति परस्य राज ;न्वीरः कविः स्वामतिपत्य दृष्टिम् ।
नावं समुद्र इव बालनेत्रा ;मारुह्य घोरे व्यसने निमज्जेत् ॥ ००४ ॥

दुर्योधनो ग्लहते पाण्डवेन ; प्रियायसे त्वं जयतीति तच्च ।
अतिनर्माज्जायते संप्रहारो ; यतो विनाशः समुपैति पुंसाम् ॥ ००५ ॥

आकर्षस्तेऽवाक्फलः कुप्रणीतो ; हृदि प्रौढो मन्त्रपदः समाधिः ।
युधिष्ठिरेण सफलः संस्तवोऽस्तु ; साम्नः सुरिक्तोऽरिमतेः सुधन्वा ॥ ००६ ॥

प्रातिपीयाः शांतनवाश्च राज ;न्काव्यां वाचं शृणुत मात्यगाद्वः ।
वैश्वानरं प्रज्वलितं सुघोर ;मयुद्धेन प्रशमयतोत्पतन्तम् ॥ ००७ ॥

यदा मन्युं पाण्डवोऽजातशत्रु ;र्न संयच्छेदक्षमयाभिभूतः ।
वृकोदरः सव्यसाची यमौ च ; कोऽत्र द्वीपः स्यात्तुमुले वस्तदानीम् ॥ ००८ ॥

महाराज प्रभवस्त्वं धनानां ; पुरा द्यूतान्मनसा यावदिच्छेः ।
बहु वित्तं पाण्डवांश्चेज्जयेस्त्वं ; किं तेन स्याद्वसु विन्देह पार्थान् ॥ ००९ ॥

जानीमहे देवितं सौबलस्य ; वेद द्यूते निकृतिं पार्वतीयः ।
यतः प्राप्तः शकुनिस्तत्र यातु ; मायायोधी भारत पार्वतीयः ॥ ०१० ॥

# अध्याय ०५७

दुर्योधन उवाच ॥

परेषामेव यशसा श्लाघसे त्वं ; सदा छन्नः कुत्सयन्धार्तराष्ट्रान् ।
जानीमस्त्वां विदुर यत्प्रियस्त्वं ; बालानिवास्मानवमन्यसे त्वम् ॥ ००१ ॥

सुविज्ञेयः पुरुषोऽन्यत्रकामो ; निन्दाप्रशंसे हि तथा युनक्ति ।
जिह्वा मनस्ते हृदयं निर्व्यनक्ति ; ज्यायो निराह मनसः प्रातिकूल्यम् ॥ ००२ ॥

उत्सङ्गेन व्याल इवाहृतोऽसि ; मार्जारवत्पोषकं चोपहंसि ।
भर्तृघ्नत्वान्न हि पापीय आहु ;स्तस्मात्क्षत्तः किं न बिभेषि पापात् ॥ ००३ ॥

जित्वा शत्रून्फलमाप्तं महन्नो ; मास्मान्क्षत्तः परुषाणीह वोचः ।
द्विषद्भिस्त्वं संप्रयोगाभिनन्दी ; मुहुर्द्वेषं यासि नः संप्रमोहात् ॥ ००४ ॥

अमित्रतां याति नरोऽक्षमं ब्रुव ;न्निगूहते गुह्यममित्रसंस्तवे ।
तदाश्रितापत्रपा किं न बाधते ; यदिच्छसि त्वं तदिहाद्य भाषसे ॥ ००५ ॥

मा नोऽवमंस्था विद्म मनस्तवेदं ; शिक्षस्व बुद्धिं स्थविराणां सकाशात् ।
यशो रक्षस्व विदुर संप्रणीतं ; मा व्यापृतः परकार्येषु भूस्त्वम् ॥ ००६ ॥

अहं कर्तेति विदुर मावमंस्था ; मा नो नित्यं परुषाणीह वोचः ।
न त्वां पृच्छामि विदुर यद्धितं मे ; स्वस्ति क्षत्तर्मा तितिक्षून्क्षिणु त्वम् ॥ ००७ ॥

एकः शास्ता न द्वितीयोऽस्ति शास्ता ; गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुशिष्टः प्रवणादिवाम्भो ; यथा नियुक्तोऽस्मि तथा वहामि ॥ ००८ ॥

भिनत्ति शिरसा शैलमहिं भोजयते च यः ।

स एव तस्य कुरुते कार्याणामनुशासनम् ॥ ००९ ॥

यो बलादनुशास्तीह सोऽमित्रं तेन विन्दति ।
मित्रतामनुवृत्तं तु समुपेक्षेत पण्डितः ॥ ०१० ॥

प्रदीप्य यः प्रदीप्ताग्निं प्राक्त्वरन्नाभिधावति ।
भस्मापि न स विन्देत शिष्टं क्वचन भारत ॥ ०११ ॥

न वासयेत्पारवर्ग्यं द्विषन्तं ; विशेषतः क्षत्तरहितं मनुष्यम् ।
स यत्रेच्छसि विदुर तत्र गच्छ ; सुसान्त्वितापि ह्यसती स्त्री जहाति ॥ ०१२ ॥

विदुर उवाच ॥

एतावता ये पुरुषं त्यजन्ति ; तेषां सख्यमन्तवद्ब्रूहि राजन् ।
राज्ञां हि चित्तानि परिप्लुतानि ; सान्त्वं दत्त्वा मुसलैर्घातयन्ति ॥ ०१३ ॥

अबालस्त्वं मन्यसे राजपुत्र ; बालोऽहमित्येव सुमन्दबुद्धे ।
यः सौहृदे पुरुषं स्थापयित्वा ; पश्चादेनं दूषयते स बालः ॥ ०१४ ॥

न श्रेयसे नीयते मन्दबुद्धिः ; स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ध्रुवं न रोचेद्भरतर्षभस्य ; पतिः कुमार्या इव षष्टिवर्षः ॥ ०१५ ॥

अनुप्रियं चेदनुकाङ्क्षसे त्वं ; सर्वेषु कार्येषु हिताहितेषु ।
स्त्रियश्च राजञ्जडपङ्गुकांश्च ; पृच्छ त्वं वै तादृशांश्चैव मूढान् ॥ ०१६ ॥

लभ्यः खलु प्रातिपीय नरोऽनुप्रियवागिह ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ०१७ ॥

यस्तु धर्मे पराश्वस्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ ०१८ ॥

अव्याधिजं कटुकं तीक्ष्णमुष्णं ; यशोमुषं परुषं पूतिगन्धि ।
सतां पेयं यन्न पिबन्त्यसन्तो ; मन्युं महाराज पिब प्रशाम्य ॥ ०१९ ॥

वैचित्रवीर्यस्य यशो धनं च ; वाञ्छाम्यहं सहपुत्रस्य शश्वत् ।
यथा तथा वोऽस्तु नमश्च वोऽस्तु ; ममापि च स्वस्ति दिशन्तु विप्राः ॥ ०२० ॥

आशीविषान्नेत्रविषान्कोपयेन्न तु पण्डितः ।
एवं तेऽहं वदामीदं प्रयतः कुरुनन्दन ॥ ०२१ ॥

---

# अध्याय ०५८

शकुनिरुवाच ॥

बहु वित्तं पराजैषीः पाण्डवानां युधिष्ठिर ।
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ॥ ००१ ॥

युधिष्ठिर उवाच ॥

मम वित्तमसंख्येयं यदहं वेद सौबल ।
अथ त्वं शकुने कस्माद्वित्तं समनुपृच्छसि ॥ ००२ ॥

अयुतं प्रयुतं चैव खर्वं पद्मं तथार्बुदम् ।
शङ्खं चैव निखर्वं च समुद्रं चात्र पण्यताम् ॥ ००३ ॥

एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ ००३ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ००४ ॥

युधिष्ठिर उवाच ॥

गवाश्वं बहुधेनूकमसंख्येयमजाविकम् ।
यत्किञ्चिदनुवर्णानां प्राक्सिन्धोरपि सौबल ॥ ००५ ॥

एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ ००५ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ००६ ॥

युधिष्ठिर उवाच ॥

पुरं जनपदो भूमिरब्राह्मणधनैः सह ।
अब्राह्मणाश्च पुरुषा राजञ्शिष्टं धनं मम ॥ ००७ ॥

एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ ००७ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ००८ ॥

युधिष्ठिर उवाच ॥

राजपुत्रा इमे राजञ्शोभन्ते येन भूषिताः ।
कुण्डलानि च निष्काश्च सर्वं चाङ्गविभूषणम् ॥ ००९ ॥

एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ ००९ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०१० ॥

युधिष्ठिर उवाच ॥

श्यामो युवा लोहिताक्षः सिंहस्कन्धो महाभुजः ।
नकुलो ग्लह एको मे यच्चैतत्स्वगतं धनम् ॥ ०११ ॥

शकुनिरुवाच ॥

प्रियस्ते नकुलो राजन्राजपुत्रो युधिष्ठिर ।
अस्माकं धनतां प्राप्तो भूयस्त्वं केन दीव्यसि ॥ ०१२ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा तु शकुनिस्तानक्षान्प्रत्यपद्यत ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०१३ ॥

युधिष्ठिर उवाच ॥

अयं धर्मान्सहदेवोऽनुशास्ति ; लोके ह्यस्मिन्पण्डिताख्यां गतश्च ।
अनर्हता राजपुत्रेण तेन ; त्वया दीव्याम्यप्रियवत्प्रियेण ॥ ०१४ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।

जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०१५ ॥

शकुनिरुवाच ॥

माद्रीपुत्रौ प्रियौ राजंस्तवेमौ विजितौ मया ।
गरीयांसौ तु ते मन्ये भीमसेनधनञ्जयौ ॥ ०१६ ॥

युधिष्ठिर उवाच ॥

अधर्मं चरसे नूनं यो नावेक्षसि वै नयम् ।
यो नः सुमनसां मूढ विभेदं कर्तुमिच्छसि ॥ ०१७ ॥

शकुनिरुवाच ॥

गर्ते मत्तः प्रपतति प्रमत्तः स्थाणुमृच्छति ।
ज्येष्ठो राजन्वरिष्ठोऽसि नमस्ते भरतर्षभ ॥ ०१८ ॥

स्वप्ने न तानि पश्यन्ति जाग्रतो वा युधिष्ठिर ।
कितवा यानि दीव्यन्तः प्रलपन्त्युत्कटा इव ॥ ०१९ ॥

युधिष्ठिर उवाच ॥

यो नः संख्ये नौरिव पारनेता ; जेता रिपूणां राजपुत्रस्तरस्वी ।
अनर्हता लोकवीरेण तेन ; दीव्याम्यहं शकुने फल्गुनेन ॥ ०२० ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२१ ॥

शकुनिरुवाच ॥

अयं मया पाण्डवानां धनुर्धरः ; पराजितः पाण्डवः सव्यसाची ।
भीमेन राजन्दयितेन दीव्य ; यत्कैतव्यं पाण्डव तेऽवशिष्टम् ॥ ०२२ ॥

युधिष्ठिर उवाच ॥

यो नो नेता यो युधां नः प्रणेता ; यथा वज्री दानवशत्रुरेकः ।
तिर्यक्प्रेक्षी संहतभ्रूर्महात्मा ; सिंहस्कन्धो यश्च सदात्यमर्षी ॥ ०२३ ॥

बलेन तुल्यो यस्य पुमान्न विद्यते ; गदाभृतामग्र्य इहारिमर्दनः ।
अनर्हता राजपुत्रेण तेन ; दीव्याम्यहं भीमसेनेन राजन् ॥ ०२४ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२५ ॥

शकुनिरुवाच ॥

बहु वित्तं पराजैषीर्भ्रातॄंश्च सहयद्विपान् ।
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ॥ ०२६ ॥

युधिष्ठिर उवाच ॥

अहं विशिष्टः सर्वेषां भ्रातॄणां दयितस्तथा ।
कुर्यामस्ते जिताः कर्म स्वयमात्मन्युपप्लवे ॥ ०२७ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२८ ॥

शकुनिरुवाच ॥

एतत्पापिष्ठमकरोर्यदात्मानं पराजितः ।
शिष्टे सति धने राजन्पाप आत्मपराजयः ॥ ०२९ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा मताक्षस्तान्ग्लहे सर्वानवस्थितान् ।
पराजयल्लोकवीरानाक्षेपेण पृथक्पृथक् ॥ ०३० ॥

शकुनिरुवाच ॥

अस्ति वै ते प्रिया देवी ग्लह एकोऽपराजितः ।
पणस्व कृष्णां पाञ्चालीं तयात्मानं पुनर्जय ॥ ०३१ ॥

युधिष्ठिर उवाच ॥

नैव ह्रस्वा न महती नातिकृष्णा न रोहिणी ।
सरागरक्तनेत्रा च तया दीव्याम्यहं त्वया ॥ ०३२ ॥

शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया ।
शारदोत्पलसेविन्या रूपेण श्रीसमानया ॥ ०३३ ॥

तथैव स्यादानृशंस्यात्तथा स्याद्रूपसंपदा ।
तथा स्याच्छीलसंपत्त्या यामिच्छेत्पुरुषः स्त्रियम् ॥ ०३४ ॥

चरमं संविशति या प्रथमं प्रतिबुध्यते ।
आ गोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥ ०३५ ॥

आभाति पद्मवद्वक्त्रं सस्वेदं मल्लिकेव च ।

वेदीमध्या दीर्घकेशी ताम्राक्षी नातिरोमशा ॥ ०३६ ॥

तयैवंविधया राजन्पाञ्चाल्याहं सुमध्यया ।
ग्लहं दीव्यामि चार्वङ्ग्या द्रौपद्या हन्त सौबल ॥ ०३७ ॥

वैशंपायन उवाच ॥

एवमुक्ते तु वचने धर्मराजेन भारत ।
धिग्धिगित्येव वृद्धानां सभ्यानां निःसृता गिरः ॥ ०३८ ॥

चुक्षुभे सा सभा राजन्राज्ञां सञ्जज्ञिरे कथाः ।
भीष्मद्रोणकृपादीनां स्वेदश्च समजायत ॥ ०३९ ॥

शिरो गृहीत्वा विदुरो गतसत्त्व इवाभवत् ।
आस्ते ध्यायन्नधोवक्त्रो निःश्वसन्पन्नगो यथा ॥ ०४० ॥

धृतराष्ट्रस्तु संहृष्टः पर्यपृच्छत्पुनः पुनः ।
किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत ॥ ०४१ ॥

जहर्ष कर्णोऽतिभृशं सह दुःशासनादिभिः ।
इतरेषां तु सभ्यानां नेत्रेभ्यः प्रापतज्जलम् ॥ ०४२ ॥

सौबलस्त्वविचार्यैव जितकाशी मदोत्कटः ।
जितमित्येव तानक्षान्पुनरेवान्वपद्यत ॥ ०४३ ॥

---

# अध्याय ०५९

दुर्योधन उवाच ॥

एहि क्षत्तर्द्रौपदीमानयस्व ; प्रियां भार्यां संमतां पाण्डवानाम् ।
संमार्जतां वेश्म परैतु शीघ्र ;मानन्दो नः सह दासीभिरस्तु ॥ ००१ ॥

विदुर उवाच ॥

दुर्विभाव्यं भवति त्वादृशेन ; न मन्द संबुध्यसि पाशबद्धः ।
प्रपाते त्वं लम्बमानो न वेत्सि ; व्याघ्रान्मृगः कोपयसेऽतिबाल्यात् ॥ ००२ ॥

आशीविषाः शिरसि ते पूर्णकोशा महाविषाः ।
मा कोपिष्ठाः सुमन्दात्मन्मा गमस्त्वं यमक्षयम् ॥ ००३ ॥

न हि दासीत्वमापन्ना कृष्णा भवति भारत ।
अनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः ॥ ००४ ॥

अयं धत्ते वेणुरिवात्मघाती ; फलं राजा धृतराष्ट्रस्य पुत्रः ।
द्यूतं हि वैराय महाभयाय ; पक्वो न बुध्यत्ययमन्तकाले ॥ ००५ ॥

नारुंतुदः स्यान्न नृशंसवादी ; न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत ; न तां वदेद्रुशतीं पापलोक्याम् ॥ ००६ ॥

समुच्चरन्त्यतिवादा हि वक्त्रा ;द्यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति ; तान्पण्डितो नावसृजेत्परेषु ॥ ००७ ॥

अजो हि शस्त्रमखनत्किलैकः ; शस्त्रे विपन्ने पद्भिरपास्य भूमिम् ।
निकृन्तनं स्वस्य कण्ठस्य घोरं ; तद्वद्वैरं मा खनीः पाण्डुपुत्रैः ॥ ००८ ॥

न किंचिदीड्यं प्रवदन्ति पापं ; वनेचरं वा गृहमेधिनं वा ।
तपस्विनं संपरिपूर्णविद्यं ; भषन्ति हैवं श्वनराः सदैव ॥ ००९ ॥

द्वारं सुघोरं नरकस्य जिह्मं ; न बुध्यसे धृतराष्ट्रस्य पुत्र ।

त्वामन्वेतारो बहवः कुरूणां ; द्यूतोदये सह दुःशासनेन ॥ ०१० ॥

मज्जन्त्यलाबूनि शिलाः प्लवन्ते ; मुह्यन्ति नावोऽम्भसि शश्वदेव ।
मूढो राजा धृतराष्ट्रस्य पुत्रो ; न मे वाचः पथ्यरूपाः शृणोति ॥ ०११ ॥

अन्तो नूनं भवितायं कुरूणां ; सुदारुणः सर्वहरो विनाशः ।
वाचः काव्याः सुहृदां पथ्यरूपा ; न श्रूयन्ते वर्धते लोभ एव ॥ ०१२ ॥

---

# अध्याय ०६०

वैशंपायन उवाच ॥

धिगस्तु क्षत्तारमिति ब्रुवाणो ; दर्पेण मत्तो धृतराष्ट्रस्य पुत्रः ।
अवैक्षत प्रातिकामीं सभाया ;मुवाच चैनं परमार्यमध्ये ॥ ००१ ॥

त्वं प्रातिकामिन्द्रौपदीमानयस्व ; न ते भयं विद्यते पाण्डवेभ्यः ।
क्षत्ता ह्ययं विवदत्येव भीरु ;र्न चास्माकं वृद्धिकामः सदैव ॥ ००२ ॥

एवमुक्तः प्रातिकामी स सूतः ; प्रायाच्छीघ्रं राजवचो निशम्य ।
प्रविश्य च श्वेव स सिंहगोष्ठं ; समासदन्महिषीं पाण्डवानाम् ॥ ००३ ॥

प्रातिकाम्युवाच ॥

युधिष्ठिरे द्यूतमदेन मत्ते ; दुर्योधनो द्रौपदि त्वामजैषीत् ।
सा प्रपद्य त्वं धृतराष्ट्रस्य वेश्म ; नयामि त्वां कर्मणे याज्ञसेनि ॥ ००४ ॥

द्रौपद्युवाच ॥

कथं त्वेवं वदसि प्रातिकामि ;न्को वै दीव्येद्भार्यया राजपुत्रः ।
मूढो राजा द्यूतमदेन मत्त ; आहो नान्यत्कैतवमस्य किञ्चित् ॥ ००५ ॥

प्रातिकाम्युवाच ॥

यदा नाभूत्कैतवमन्यदस्य ; तदादेवीत्पाण्डवोऽजातशत्रुः ।
न्यस्ताः पूर्वं भ्रातरस्तेन राज्ञा ; स्वयं चात्मा त्वमथो राजपुत्रि ॥ ००६ ॥

द्रौपद्युवाच ॥

गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज ।
किं नु पूर्वं पराजैषीरात्मानं मां नु भारत ॥ ००७ ॥

एतज्ज्ञात्वा त्वमागच्छ ततो मां नय सूतज ॥ ००७ ॥

वैशंपायन उवाच ॥

सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा ।
कस्येशो नः पराजैषीरिति त्वामाह द्रौपदी ॥ ००८ ॥

किं नु पूर्वं पराजैषीरात्मानमथ वापि माम् ॥ ००८ ॥

युधिष्ठिरस्तु निश्चेष्टो गतसत्त्व इवाभवत् ।
न तं सूतं प्रत्युवाच वचनं साध्वसाधु वा ॥ ००९ ॥

दुर्योधन उवाच ॥

इहैत्य कृष्णा पाञ्चाली प्रश्नमेतं प्रभाषताम् ।
इहैव सर्वे शृण्वन्तु तस्या अस्य च यद्वचः ॥ ०१० ॥

वैशंपायन उवाच ॥

स गत्वा राजभवनं दुर्योधनवशानुगः ।
उवाच द्रौपदीं सूतः प्रातिकामी व्यथन्निव ॥ ०११ ॥

सभ्यास्त्वमी राजपुत्र्याह्वयन्ति ; मन्ये प्राप्तः सङ्क्षयः कौरवाणाम् ।
न वै समृद्धिं पालयते लघीया ;न्यत्त्वं सभामेष्यसि राजपुत्रि ॥ ०१२ ॥

द्रौपद्युवाच ॥

एवं नूनं व्यदधात्संविधाता ; स्पर्शावुभौ स्पृशतो धीरबालौ ।
धर्मं त्वेकं परमं प्राह लोके ; स नः शमं धास्यति गोप्यमानः ॥ ०१३ ॥

वैशंपायन उवाच ॥

युधिष्ठिरस्तु तच्छ्रुत्वा दुर्योधनचिकीर्षितम् ।
द्रौपद्याः संमतं दूतं प्राहिणोद्भरतर्षभ ॥ ०१४ ॥

एकवस्त्रा अधोनीवी रोदमाना रजस्वला ।
सभामागम्य पाञ्चाली श्वशुरस्याग्रतोऽभवत् ॥ ०१५ ॥

ततस्तेषां मुखमालोक्य राजा ; दुर्योधनः सूतमुवाच हृष्टः ।
इहैवैतामानय प्रातिकामि ;न्प्रत्यक्षमस्याः कुरवो ब्रुवन्तु ॥ ०१६ ॥

ततः सूतस्तस्य वशानुगामी ; भीतश्च कोपाद्द्रुपदात्मजायाः ।
विहाय मानं पुनरेव सभ्या ;नुवाच कृष्णां किमहं ब्रवीमि ॥ ०१७ ॥

दुर्योधन उवाच ॥

दुःशासनैष मम सूतपुत्रो ; वृकोदरादुद्विजतेऽल्पचेताः ।
स्वयं प्रगृह्यानय याज्ञसेनीं ; किं ते करिष्यन्त्यवशाः सपत्नाः ॥ ०१८ ॥

ततः समुत्थाय स राजपुत्रः ; श्रुत्वा भ्रातुः कोपविरक्तदृष्टिः ।
प्रविश्य तद्वेश्म महारथाना ;मित्यब्रवीद्द्रौपदीं राजपुत्रीम् ॥ ०१९ ॥

एह्येहि पाञ्चालि जितासि कृष्णे ; दुर्योधनं पश्य विमुक्तलज्जा ।
कुरून्भजस्वायतपद्मनेत्रे ; धर्मेण लब्धासि सभां परैहि ॥ ०२० ॥

ततः समुत्थाय सुदुर्मनाः सा ; विवर्णमामृज्य मुखं करेण ।
आर्ता प्रदुद्राव यतः स्त्रियस्ता ; वृद्धस्य राज्ञः कुरुपुङ्गवस्य ॥ ०२१ ॥

ततो जवेनाभिससार रोषा ;द्दुःशासनस्तामभिगर्जमानः ।
दीर्घेषु नीलेष्वथ चोर्मिमत्सु ; जग्राह केशेषु नरेन्द्रपत्नीम् ॥ ०२२ ॥

ये राजसूयावभृथे जलेन ; महाक्रतौ मन्त्रपूतेन सिक्ताः ।
ते पाण्डवानां परिभूय वीर्यं ; बलात्प्रमृष्टा धृतराष्ट्रजेन ॥ ०२३ ॥

स तां परामृश्य सभासमीप ;मानीय कृष्णामतिकृष्णकेशीम् ।
दुःशासनो नाथवतीमनाथव ;च्चकर्ष वायुः कदलीमिवार्ताम् ॥ ०२४ ॥

सा कृष्यमाणा नमिताङ्गयष्टिः ; शनैरुवाचाद्य रजस्वलास्मि ।
एकं च वासो मम मन्दबुद्धे ; सभां नेतुं नार्हसि मामनार्य ॥ ०२५ ॥

ततोऽब्रवीत्तां प्रसभं निगृह्य ; केशेषु कृष्णेषु तदा स कृष्णाम् ।
कृष्णं च जिष्णुं च हरिं नरं च ; त्राणाय विक्रोश नयामि हि त्वाम् ॥ ०२६ ॥

रजस्वला वा भव याज्ञसेनि ; एकाम्बरा वाप्यथ वा विवस्त्रा ।
द्यूते जिता चासि कृतासि दासी ; दासीषु कामश्च यथोपजोषम् ॥ ०२७ ॥

प्रकीर्णकेशी पतितार्धवस्त्रा ; दुःशासनेन व्यवधूयमाना ।
ह्रीमत्यमर्षेण च दह्यमाना ; शनैरिदं वाक्यमुवाच कृष्णा ॥ ०२८ ॥

इमे सभायामुपदिष्टशास्त्राः ; क्रियावन्तः सर्व एवेन्द्रकल्पाः ।

गुरुस्थाना गुरवश्चैव सर्वे ; तेषामग्रे नोत्सहे स्थातुमेवम् ॥ ०२९ ॥

नृशंसकर्मंस्त्वमनार्यवृत्त ; मा मां विवस्त्रां कृधि मा विकार्षीः ।
न मर्षयेयुस्तव राजपुत्राः ; सेन्द्रापि देवा यदि ते सहायाः ॥ ०३० ॥

धर्मे स्थितो धर्मसुतश्च राजा ; धर्मश्च सूक्ष्मो निपुणोपलभ्यः ।
वाचापि भर्तुः परमाणुमात्रं ; नेच्छामि दोषं स्वगुणान्विसृज्य ॥ ०३१ ॥

इदं त्वनार्यं कुरुवीरमध्ये ; रजस्वलां यत्परिकर्षसे माम् ।
न चापि कश्चित्कुरुतेऽत्र पूजां ; ध्रुवं तवेदं मतमन्वपद्यन् ॥ ०३२ ॥

धिगस्तु नष्टः खलु भारतानां ; धर्मस्तथा क्षत्रविदां च वृत्तम् ।
यत्राभ्यतीतां कुरुधर्मवेलां ; प्रेक्षन्ति सर्वे कुरवः सभायाम् ॥ ०३३ ॥

द्रोणस्य भीष्मस्य च नास्ति सत्त्वं ; ध्रुवं तथैवास्य महात्मनोऽपि ।
राज्ञस्तथा हीममधर्ममुग्रं ; न लक्षयन्ते कुरुवृद्धमुख्याः ॥ ०३४ ॥

तथा ब्रुवन्ती करुणं सुमध्यमा ; काक्षेण भर्तॄन्कुपितानपश्यत् ।
सा पाण्डवान्कोपपरीतदेहा ;न्संदीपयामास कटाक्षपातैः ॥ ०३५ ॥

हृतेन राज्येन तथा धनेन ; रत्नैश्च मुख्यैर्न तथा बभूव ।
यथार्तया कोपसमीरितेन ; कृष्णाकटाक्षेण बभूव दुःखम् ॥ ०३६ ॥

दुःशासनश्चापि समीक्ष्य कृष्णा ;मवेक्षमाणां कृपणान्पतींस्तान् ।
आधूय वेगेन विसञ्ज्ञकल्पा ;मुवाच दासीति हसन्निवोग्रः ॥ ०३७ ॥

कर्णस्तु तद्वाक्यमतीव हृष्टः ; संपूजयामास हसन्सशब्दम् ।
गान्धारराजः सुबलस्य पुत्र ;स्तथैव दुःशासनमभ्यनन्दत् ॥ ०३८ ॥

सभ्यास्तु ये तत्र बभूवुरन्ये ; ताभ्यामृते धार्तराष्ट्रेण चैव ।
तेषामभूद्दुःखमतीव कृष्णां ; दृष्ट्वा सभायां परिकृष्यमाणाम् ॥ ०३९ ॥

भीष्म उवाच ॥

न धर्मसौक्ष्म्यात्सुभगे विवक्तुं ; शक्नोमि ते प्रश्नमिमं यथावत् ।
अस्वो ह्यशक्तः पणितुं परस्वं ; स्त्रियश्च भर्तुर्वशतां समीक्ष्य ॥ ०४० ॥

त्यजेत सर्वां पृथिवीं समृद्धां ; युधिष्ठिरः सत्यमथो न जह्यात् ।
उक्तं जितोऽस्मीति च पाण्डवेन ; तस्मान्न शक्नोमि विवेक्तुमेतत् ॥ ०४१ ॥

द्यूतेऽद्वितीयः शकुनिर्नरेषु ; कुन्तीसुतस्तेन निसृष्टकामः ।
न मन्यते तां निकृतिं महात्मा ; तस्मान्न ते प्रश्नमिमं ब्रवीमि ॥ ०४२ ॥

द्रौपद्युवाच ॥

आहूय राजा कुशलैः सभायां ; दुष्टात्मभिर्नैकृतिकैरनार्यैः ।
द्यूतप्रियैर्नातिकृतप्रयत्नः ; कस्मादयं नाम निसृष्टकामः ॥ ०४३ ॥

स शुद्धभावो निकृतिप्रवृत्ति ;मबुध्यमानः कुरुपाण्डवाग्र्यः ।
संभूय सर्वैश्च जितोऽपि यस्मा ;त्पश्चाच्च यत्कैतवमभ्युपेतः ॥ ०४४ ॥

तिष्ठन्ति चेमे कुरवः सभाया ;मीशाः सुतानां च तथा स्नुषाणाम् ।
समीक्ष्य सर्वे मम चापि वाक्यं ; विब्रूत मे प्रश्नमिमं यथावत् ॥ ०४५ ॥

वैशंपायन उवाच ॥

तथा ब्रुवन्तीं करुणं रुदन्ती ;मवेक्षमाणामसकृत्पतींस्तान् ।
दुःशासनः परुषाण्यप्रियाणि ; वाक्यान्युवाचामधुराणि चैव ॥ ०४६ ॥

तां कृष्यमाणां च रजस्वलां च ; स्रस्तोत्तरीयामतदर्हमाणाम् ।
वृकोदरः प्रेक्ष्य युधिष्ठिरं च ; चकार कोपं परमार्तरूपः ॥ ०४७ ॥

# अध्याय ०६१

भीम उवाच ॥

भवन्ति देशे बन्धक्यः कितवानां युधिष्ठिर ।
न ताभिरुत दीव्यन्ति दया चैवास्ति तास्वपि ॥ ००१ ॥

काश्यो यद्बलिमाहार्षीद्द्रव्यं यच्चान्यदुत्तमम् ।
तथान्ये पृथिवीपाला यानि रत्नान्युपाहरन् ॥ ००२ ॥

वाहनानि धनं चैव कवचान्यायुधानि च ।
राज्यमात्मा वयं चैव कैतवेन हृतं परैः ॥ ००३ ॥

न च मे तत्र कोपोऽभूत्सर्वस्येशो हि नो भवान् ।
इदं त्वतिकृतं मन्ये द्रौपदी यत्र पण्यते ॥ ००४ ॥

एषा ह्यनर्हती बाला पाण्डवान्प्राप्य कौरवैः ।
त्वत्कृते क्लिश्यते क्षुद्रैर्नृशंसैर्निकृतिप्रियैः ॥ ००५ ॥

अस्याः कृते मन्युरयं त्वयि राजन्निपात्यते ।
बाहू ते संप्रधक्ष्यामि सहदेवाग्निमानय ॥ ००६ ॥

अर्जुन उवाच ॥

न पुरा भीमसेन त्वमीदृशीर्वदिता गिरः ।
परैस्ते नाशितं नूनं नृशंसैर्धर्मगौरवम् ॥ ००७ ॥

न सकामाः परे कार्या धर्ममेवाचरोत्तमम् ।

भ्रातरं धार्मिकं ज्येष्ठं नातिक्रमितुमर्हति ॥ ००८ ॥

आहूतो हि परै राजा क्षात्रधर्ममनुस्मरन् ।
दीव्यते परकामेन तन्नः कीर्तिकरं महत् ॥ ००९ ॥

भीमसेन उवाच ॥

एवमस्मिकृतं विद्यां यद्यस्याहं धनञ्जय ।
दीप्तेऽग्नौ सहितौ बाहू निर्दहेयं बलादिव ॥ ०१० ॥

वैशंपायन उवाच ॥

तथा तान्दुःखितान्दृष्ट्वा पाण्डवान्धृतराष्ट्रजः ।
क्लिश्यमानां च पाञ्चालीं विकर्ण इदमब्रवीत् ॥ ०११ ॥

याज्ञसेन्या यदुक्तं तद्वाक्यं विब्रूत पार्थिवाः ।
अविवेकेन वाक्यस्य नरकः सद्य एव नः ॥ ०१२ ॥

भीष्मश्च धृतराष्ट्रश्च कुरुवृद्धतमावुभौ ।
समेत्य नाहतुः किञ्चिद्विदुरश्च महामतिः ॥ ०१३ ॥

भारद्वाजोऽपि सर्वेषामाचार्यः कृप एव च ।
अत एतावपि प्रश्नं नाहतुर्द्विजसत्तमौ ॥ ०१४ ॥

ये त्वन्ये पृथिवीपालाः समेताः सर्वतो दिशः ।
कामक्रोधौ समुत्सृज्य ते ब्रुवन्तु यथामति ॥ ०१५ ॥

यदिदं द्रौपदी वाक्यमुक्तवत्यसकृच्छुभा ।
विमृश्य कस्य कः पक्षः पार्थिवा वदतोत्तरम् ॥ ०१६ ॥

एवं स बहुशः सर्वानुक्तवांस्तान्सभासदः ।

न च ते पृथिवीपालास्तमूचुः साध्वसाधु वा ॥ ०१७ ॥

उक्त्वा तथासकृत्सर्वान्विकर्णः पृथिवीपतीन् ।
पाणिं पाणौ विनिष्पिष्य निःश्वसन्निदमब्रवीत् ॥ ०१८ ॥

विब्रूत पृथिवीपाला वाक्यं मा वा कथञ्चन ।
मन्ये न्याय्यं यदत्राहं तद्धि वक्ष्यामि कौरवाः ॥ ०१९ ॥

चत्वार्याहुर्नरश्रेष्ठा व्यसनानि महीक्षिताम् ।
मृगयां पानमक्षांश्च ग्राम्ये चैवातिसक्तताम् ॥ ०२० ॥

एतेषु हि नरः सक्तो धर्ममुत्सृज्य वर्तते ।
तथायुक्तेन च कृतां क्रियां लोको न मन्यते ॥ ०२१ ॥

तदयं पाण्डुपुत्रेण व्यसने वर्तता भृशम् ।
समाहूतेन कितवैरास्थितो द्रौपदीपणः ॥ ०२२ ॥

साधारणी च सर्वेषां पाण्डवानामनिन्दिता ।
जितेन पूर्वं चानेन पाण्डवेन कृतः पणः ॥ ०२३ ॥

इयं च कीर्तिता कृष्णा सौबलेन पणार्थिना ।
एतत्सर्वं विचार्याहं मन्ये न विजितामिमाम् ॥ ०२४ ॥

एतच्छ्रुत्वा महान्नादः सभ्यानामुदतिष्ठत ।
विकर्णं शंसमानानां सौबलं च विनिन्दताम् ॥ ०२५ ॥

तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्छितः ।
प्रगृह्य रुचिरं बाहुमिदं वचनमब्रवीत् ॥ ०२६ ॥

दृश्यन्ते वै विकर्णे हि वैकृतानि बहून्यपि ।
तज्जस्तस्य विनाशाय यथाग्निररणिप्रजः ॥ ०२७ ॥

एते न किञ्चिदप्याहुश्चोद्यमानापि कृष्णया ।
धर्मेण विजितां मन्ये मन्यन्ते द्रुपदात्मजाम् ॥ ०२८ ॥

त्वं तु केवलबाल्येन धार्तराष्ट्र विदीर्यसे ।
यद्ब्रवीषि सभामध्ये बालः स्थविरभाषितम् ॥ ०२९ ॥

न च धर्मं यथातत्त्वं वेत्सि दुर्योधनावर ।
यद्ब्रवीषि जितां कृष्णामजितेति सुमन्दधीः ॥ ०३० ॥

कथं ह्यविजितां कृष्णां मन्यसे धृतराष्ट्रज ।
यदा सभायां सर्वस्वं न्यस्तवान्पाण्डवाग्रजः ॥ ०३१ ॥

अभ्यन्तरा च सर्वस्वे द्रौपदी भरतर्षभ ।
एवं धर्मजितां कृष्णां मन्यसे न जितां कथम् ॥ ०३२ ॥

कीर्तिता द्रौपदी वाचा अनुज्ञाता च पाण्डवैः ।
भवत्यविजिता केन हेतुनैषा मता तव ॥ ०३३ ॥

मन्यसे वा सभामेतामानीतामेकवाससम् ।
अधर्मेणेति तत्रापि शृणु मे वाक्यमुत्तरम् ॥ ०३४ ॥

एको भर्ता स्त्रिया देवैर्विहितः कुरुनन्दन ।
इयं त्वनेकवशगा बन्धकीति विनिश्चिता ॥ ०३५ ॥

अस्याः सभामानयनं न चित्रमिति मे मतिः ।
एकाम्बरधरत्वं वाप्यथ वापि विवस्त्रता ॥ ०३६ ॥

यच्चैषां द्रविणं किञ्चिद्या चैषा ये च पाण्डवाः ।
सौबलेनेह तत्सर्वं धर्मेण विजितं वसु ॥ ०३७ ॥

दुःशासन सुबालोऽयं विकर्णः प्राज्ञवादिकः ।
पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर ॥ ०३८ ॥

तच्छ्रुत्वा पाण्डवाः सर्वे स्वानि वासांसि भारत ।
अवकीर्योत्तरीयाणि सभायां समुपाविशन् ॥ ०३९ ॥

ततो दुःशासनो राजन्द्रौपद्या वसनं बलात् ।
सभामध्ये समाक्षिप्य व्यपक्रष्टुं प्रचक्रमे ॥ ०४० ॥

आकृष्यमाणे वसने द्रौपद्यास्तु विशां पते ।
तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः ॥ ०४१ ॥

ततो हलहलाशब्दस्तत्रासीद्घोरनिस्वनः ।
तदद्भुततमं लोके वीक्ष्य सर्वमहीक्षिताम् ॥ ०४२ ॥

शशाप तत्र भीमस्तु राजमध्ये महास्वनः ।
क्रोधाद्विस्फुरमाणोष्ठो विनिष्पिष्य करे करम् ॥ ०४३ ॥

इदं मे वाक्यमादद्ध्वं क्षत्रिया लोकवासिनः ।
नोक्तपूर्वं नरैरन्यैर्न चान्यो यद्वदिष्यति ॥ ०४४ ॥

यद्येतदेवमुक्त्वा तु न कुर्यां पृथिवीश्वराः ।
पितामहानां सर्वेषां नाहं गतिमवाप्नुयाम् ॥ ०४५ ॥

अस्य पापस्य दुर्जातेर्भारतापसदस्य च ।
न पिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं युधि ॥ ०४६ ॥

तस्य ते वचनं श्रुत्वा सर्वलोकप्रहर्षणम् ।
प्रचक्रुर्बहुलां पूजां कुत्सन्तो धृतराष्ट्रजम् ॥ ०४७ ॥

यदा तु वाससां राशिः सभामध्ये समाचितः ।

ततो दुःशासनः श्रान्तो व्रीडितः समुपाविशत् ॥ ०४८ ॥

धिक्शब्दस्तु ततस्तत्र समभूल्लोमहर्षणः ।
सभ्यानां नरदेवानां दृष्ट्वा कुन्तीसुतांस्तदा ॥ ०४९ ॥

न विब्रुवन्ति कौरव्याः प्रश्नमेतमिति स्म ह ।
स जनः क्रोशति स्मात्र धृतराष्ट्रं विगर्हयन् ॥ ०५० ॥

ततो बाहू समुच्छ्रित्य निवार्य च सभासदः ।
विदुरः सर्वधर्मज्ञ इदं वचनमब्रवीत् ॥ ०५१ ॥

विदुर उवाच ॥

द्रौपदी प्रश्नमुक्त्वैवं रोरवीति ह्यनाथवत् ।
न च विब्रूत तं प्रश्नं सभ्या धर्मोऽत्र पीड्यते ॥ ०५२ ॥

सभां प्रपद्यते ह्यार्तः प्रज्वलन्निव हव्यवाट् ।
तं वै सत्येन धर्मेण सभ्याः प्रशमयन्त्युत ॥ ०५३ ॥

धर्मप्रश्नमथो ब्रूयादार्तः सभ्येषु मानवः ।
विब्रूयुस्तत्र ते प्रश्नं कामक्रोधवशातिगाः ॥ ०५४ ॥

विकर्णेन यथाप्रज्ञमुक्तः प्रश्नो नराधिपाः ।
भवन्तोऽपि हि तं प्रश्नं विब्रुवन्तु यथामति ॥ ०५५ ॥

यो हि प्रश्नं न विब्रूयाद्धर्मदर्शी सभां गतः ।
अनृते या फलावाप्तिस्तस्याः सोऽर्धं समश्नुते ॥ ०५६ ॥

यः पुनर्वितथं ब्रूयाद्धर्मदर्शी सभां गतः ।
अनृतस्य फलं कृत्स्नं संप्राप्नोतीति निश्चयः ॥ ०५७ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराङ्गिरसस्य च ॥ ०५८ ॥

प्रह्लादो नाम दैत्येन्द्रस्तस्य पुत्रो विरोचनः ।
कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत् ॥ ०५९ ॥

अहं ज्यायानहं ज्यायानिति कन्येप्सया तदा ।
तयोर्देवनमत्रासीत्प्राणयोरिति नः श्रुतम् ॥ ०६० ॥

तयोः प्रश्नविवादोऽभूत्प्रह्लादं तावपृच्छताम् ।
ज्यायान्क आवयोरेकः प्रश्नं प्रब्रूहि मा मृषा ॥ ०६१ ॥

स वै विवदनाद्भीतः सुधन्वानं व्यलोकयत् ।
तं सुधन्वाब्रवीत्क्रुद्धो ब्रह्मदण्ड इव ज्वलन् ॥ ०६२ ॥

यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि ।
शतधा ते शिरो वज्री वज्रेण प्रहरिष्यति ॥ ०६३ ॥

सुधन्वना तथोक्तः सन्व्यथितोऽश्वत्थपर्णवत् ।
जगाम कश्यपं दैत्यः परिप्रष्टुं महौजसम् ॥ ०६४ ॥

प्रह्लाद उवाच ॥

त्वं वै धर्मस्य विज्ञाता दैवस्येहासुरस्य च ।
ब्राह्मणस्य महाप्राज्ञ धर्मकृच्छ्रमिदं शृणु ॥ ०६५ ॥

यो वै प्रश्नं न विब्रूयाद्वितथं वापि निर्दिशेत् ।
के वै तस्य परे लोकास्तन्ममाचक्ष्व पृच्छतः ॥ ०६६ ॥

कश्यप उवाच ॥

जानन्न विब्रुवन्प्रश्नं कामात्क्रोधात्तथा भयात् ।
सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति ॥ ०६७ ॥

तस्य संवत्सरे पूर्णे पाश एकः प्रमुच्यते ।
तस्मात्सत्यं तु वक्तव्यं जानता सत्यमञ्जसा ॥ ०६८ ॥

विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ॥ ०६९ ॥

अर्धं हरति वै श्रेष्ठः पादो भवति कर्तृषु ।
पादश्चैव सभासत्सु ये न निन्दन्ति निन्दितम् ॥ ०७० ॥

अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥ ०७१ ॥

वितथं तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते ।
इष्टापूर्तं च ते घ्नन्ति सप्त चैव परावरान् ॥ ०७२ ॥

हृतस्वस्य हि यद्दुःखं हतपुत्रस्य चापि यत् ।
ऋणिनं प्रति यच्चैव राज्ञा ग्रस्तस्य चापि यत् ॥ ०७३ ॥

स्त्रियाः पत्या विहीनायाः सार्थाद्भ्रष्टस्य चैव यत् ।
अध्यूढायाश्च यद्दुःखं साक्षिभिर्विहतस्य च ॥ ०७४ ॥

एतानि वै समान्याहुर्दुःखानि त्रिदशेश्वराः ।
तानि सर्वाणि दुःखानि प्राप्नोति वितथं ब्रुवन् ॥ ०७५ ॥

समक्षदर्शनात्साक्ष्यं श्रवणाच्चेति धारणात् ।
तस्मात्सत्यं ब्रुवन्साक्षी धर्मार्थाभ्यां न हीयते ॥ ०७६ ॥

विदुर उवाच ॥

कश्यपस्य वचः श्रुत्वा प्रह्लादः पुत्रमब्रवीत् ।
श्रेयान्सुधन्वा त्वत्तो वै मत्तः श्रेयांस्तथाङ्गिराः ॥ ०७७ ॥

माता सुधन्वनश्चापि श्रेयसी मातृतस्तव ।
विरोचन सुधन्वायं प्राणानामीश्वरस्तव ॥ ०७८ ॥

सुधन्वोवाच ॥

पुत्रस्नेहं परित्यज्य यस्त्वं धर्मे प्रतिष्ठितः ।
अनुजानामि ते पुत्रं जीवत्वेष शतं समाः ॥ ०७९ ॥

विदुर उवाच ॥

एवं वै परमं धर्मं श्रुत्वा सर्वे सभासदः ।
यथाप्रश्नं तु कृष्णाया मन्यध्वं तत्र किं परम् ॥ ०८० ॥

वैशंपायन उवाच ॥

विदुरस्य वचः श्रुत्वा नोचुः किञ्चन पार्थिवाः ।
कर्णो दुःशासनं त्वाह कृष्णां दासीं गृहान्नय ॥ ०८१ ॥

तां वेपमानां सव्रीडां प्रलपन्तीं स्म पाण्डवान् ।
दुःशासनः सभामध्ये विचकर्ष तपस्विनीम् ॥ ०८२ ॥

---

# अध्याय ०६२

द्रौपद्युवाच ॥

पुरस्तात्करणीयं मे न कृतं कार्यमुत्तरम् ।
विह्वलास्मि कृतानेन कर्षता बलिना बलात् ॥ ००१ ॥

अभिवादं करोम्येषां गुरूणां कुरुसंसदि ।
न मे स्यादपराधोऽयं यदिदं न कृतं मया ॥ ००२ ॥

वैशंपायन उवाच ॥

सा तेन च समुद्धूता दुःखेन च तपस्विनी ।
पतिता विललापेदं सभायामतथोचिता ॥ ००३ ॥

द्रौपद्युवाच ॥

स्वयंवरे यास्मि नृपैर्दृष्टा रङ्गे समागतैः ।
न दृष्टपूर्वा चान्यत्र साहमद्य सभां गता ॥ ००४ ॥

यां न वायुर्न चादित्यो दृष्टवन्तौ पुरा गृहे ।
साहमद्य सभामध्ये दृश्यामि कुरुसंसदि ॥ ००५ ॥

यां न मृष्यन्ति वातेन स्पृश्यमानां पुरा गृहे ।
स्पृश्यमानां सहन्तेऽद्य पाण्डवास्तां दुरात्मना ॥ ००६ ॥

मृष्यन्ते कुरवश्चेमे मन्ये कालस्य पर्ययम् ।
स्नुषां दुहितरं चैव क्लिश्यमानामनर्हतीम् ॥ ००७ ॥

किं त्वतः कृपणं भूयो यदहं स्त्री सती शुभा ।
सभामध्यं विगाहेऽद्य क्व नु धर्मो महीक्षिताम् ॥ ००८ ॥

धर्म्याः स्त्रियः सभां पूर्वं न नयन्तीति नः श्रुतम् ।
स नष्टः कौरवेयेषु पूर्वो धर्मः सनातनः ॥ ००९ ॥

कथं हि भार्या पाण्डूनां पार्षतस्य स्वसा सती ।
वासुदेवस्य च सखी पार्थिवानां सभामियाम् ॥ ०१० ॥

तामिमां धर्मराजस्य भार्यां सदृशवर्णजाम् ।
ब्रूत दासीमदासीं वा तत्करिष्यामि कौरवाः ॥ ०११ ॥

अयं हि मां दृढं क्षुद्रः कौरवाणां यशोहरः ।
क्लिश्नाति नाहं तत्सोढुं चिरं शक्ष्यामि कौरवाः ॥ ०१२ ॥

जितां वाप्यजितां वापि मन्यध्वं वा यथा नृपाः ।
तथा प्रत्युक्तमिच्छामि तत्करिष्यामि कौरवाः ॥ ०१३ ॥

भीष्म उवाच ॥

उक्तवानस्मि कल्याणि धर्मस्य तु परां गतिम् ।
लोके न शक्यते गन्तुमपि विप्रैर्महात्मभिः ॥ ०१४ ॥

बलवांस्तु यथा धर्मं लोके पश्यति पूरुषः ।
स धर्मो धर्मवेलायां भवत्यभिहितः परैः ॥ ०१५ ॥

न विवेक्तुं च ते प्रश्नमेतं शक्नोमि निश्चयात् ।
सूक्ष्मत्वाद्गहनत्वाच्च कार्यस्यास्य च गौरवात् ॥ ०१६ ॥

नूनमन्तः कुलस्यास्य भविता नचिरादिव ।
तथा हि कुरवः सर्वे लोभमोहपरायणाः ॥ ०१७ ॥

कुलेषु जाताः कल्याणि व्यसनाभ्याहता भृशम् ।
धर्म्यान्मार्गान्न च्यवन्ते यथा नस्त्वं वधूः स्थिता ॥ ०१८ ॥

उपपन्नं च पाञ्चालि तवेदं वृत्तमीदृशम् ।

यत्कृच्छ्रमपि संप्राप्ता धर्ममेवान्ववेक्षसे ॥ ०१९ ॥

एते द्रोणादयश्चैव वृद्धा धर्मविदो जनाः ।
शून्यैः शरीरैस्तिष्ठन्ति गतासव इवानताः ॥ ०२० ॥

युधिष्ठिरस्तु प्रश्नेऽस्मिन्प्रमाणमिति मे मतिः ।
अजितां वा जितां वापि स्वयं व्याहर्तुमर्हति ॥ ०२१ ॥

वैशंपायन उवाच ॥

तथा तु दृष्ट्वा बहु तत्तदेवं ; रोरूयमाणां कुररीमिवार्ताम् ।
नोचुर्वचः साध्वथ वाप्यसाधु ; महीक्षितो धार्तराष्ट्रस्य भीताः ॥ ०२२ ॥

दृष्ट्वा तु तान्पार्थिवपुत्रपौत्रां ;स्तूष्णींभूतान्धृतराष्ट्रस्य पुत्रः ।
स्मयन्निवेदं वचनं बभाषे ; पाञ्चालराजस्य सुतां तदानीम् ॥ ०२३ ॥

तिष्ठत्वयं प्रश्न उदारसत्त्वे ; भीमेऽर्जुने सहदेवे तथैव ।
पत्यौ च ते नकुले याज्ञसेनि ; वदन्त्वेते वचनं त्वत्प्रसूतम् ॥ ०२४ ॥

अनीश्वरं विब्रुवन्त्वार्यमध्ये ; युधिष्ठिरं तव पाञ्चालि हेतोः ।
कुर्वन्तु सर्वे चानृतं धर्मराजं ; पाञ्चालि त्वं मोक्ष्यसे दासभावात् ॥ ०२५ ॥

धर्मे स्थितो धर्मराजो महात्मा ; स्वयं चेदं कथयत्विन्द्रकल्पः ।
ईशो वा ते यद्यनीशोऽथ वैष ; वाक्यादस्य क्षिप्रमेकं भजस्व ॥ ०२६ ॥

सर्वे हीमे कौरवेयाः सभायां ; दुःखान्तरे वर्तमानास्तवैव ।
न विब्रुवन्त्यार्यसत्त्वा यथाव ;त्पतींश्च ते समवेक्ष्याल्पभाग्यान् ॥ ०२७ ॥

ततः सभ्याः कुरुराजस्य तत्र ; वाक्यं सर्वे प्रशशंसुस्तदोच्चैः ।
चेलावेधांश्चापि चक्रुर्नदन्तो ; हा हेत्यासीदपि चैवात्र नादः ॥ ०२८ ॥

सर्वे चासन्पार्थिवाः प्रीतिमन्तः ; कुरुश्रेष्ठं धार्मिकं पूजयन्तः ॥ ०२८ ॥

युधिष्ठिरं च ते सर्वे समुदैक्षन्त पार्थिवाः ।
किं नु वक्ष्यति धर्मज्ञ इति साचीकृताननाः ॥ ०२९ ॥

किं नु वक्ष्यति बीभत्सुरजितो युधि पाण्डवः ।
भीमसेनो यमौ चेति भृशं कौतूहलान्विताः ॥ ०३० ॥

तस्मिन्नुपरते शब्दे भीमसेनोऽब्रवीदिदम् ।
प्रगृह्य विपुलं वृत्तं भुजं चन्दनरूषितम् ॥ ०३१ ॥

यद्येष गुरुरस्माकं धर्मराजो युधिष्ठिरः ।
न प्रभुः स्यात्कुलस्यास्य न वयं मर्षयेमहि ॥ ०३२ ॥

ईशो नः पुण्यतपसां प्राणानामपि चेश्वरः ।
मन्यते जितमात्मानं यद्येष विजिता वयम् ॥ ०३३ ॥

न हि मुच्येत जीवन्मे पदा भूमिमुपस्पृशन् ।
मर्त्यधर्मा परामृश्य पाञ्चाल्या मूर्धजानिमान् ॥ ०३४ ॥

पश्यध्वमायतौ वृत्तौ भुजौ मे परिघाविव ।
नैतयोरन्तरं प्राप्य मुच्येतापि शतक्रतुः ॥ ०३५ ॥

धर्मपाशसितस्त्वेवं नाधिगच्छामि सङ्कटम् ।
गौरवेण निरुद्धश्च निग्रहादर्जुनस्य च ॥ ०३६ ॥

धर्मराजनिसृष्टस्तु सिंहः क्षुद्रमृगानिव ।
धार्तराष्ट्रानिमान्पापान्निष्पिषेयं तलासिभिः ॥ ०३७ ॥

तमुवाच तदा भीष्मो द्रोणो विदुर एव च ।
क्षम्यतामेवमित्येवं सर्वं संभवति त्वयि ॥ ०३८ ॥

# अध्याय ०६३

कर्ण उवाच ॥

त्रयः किलेमे अधना भवन्ति ; दासः शिष्यश्चास्वतन्त्रा च नारी ।
दासस्य पत्नी त्वं धनमस्य भद्रे ; हीनेश्वरा दासधनं च दासी ॥ ००१ ॥

प्रविश्य सा नः परिचारैर्भजस्व ; तत्ते कार्यं शिष्टमावेश्य वेश्म ।
ईशाः स्म सर्वे तव राजपुत्रि ; भवन्ति ते धार्तराष्ट्रा न पार्थाः ॥ ००२ ॥

अन्यं वृणीष्व पतिमाशु भामिनि ; यस्माद्दास्यं न लभसे देवनेन ।
अनवद्या वै पतिषु कामवृत्ति ;र्नित्यं दास्ये विदितं वै तवास्तु ॥ ००३ ॥

पराजितो नकुलो भीमसेनो ; युधिष्ठिरः सहदेवोऽर्जुनश्च ।
दासीभूता प्रविश याज्ञसेनि ; पराजितास्ते पतयो न सन्ति ॥ ००४ ॥

प्रयोजनं चात्मनि किं नु मन्यते ; पराक्रमं पौरुषं चेह पार्थः ।
पाञ्चाल्यस्य द्रुपदस्यात्मजामिमां ; सभामध्ये योऽतिदेवीद्ग्लहेषु ॥ ००५ ॥

वैशंपायन उवाच ॥

तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी ; भृशं निशश्वास तदार्तरूपः ।
राजानुगो धर्मपाशानुबद्धो ; दहन्निवैनं कोपविरक्तदृष्टिः ॥ ००६ ॥

भीम उवाच ॥

नाहं कुप्ये सूतपुत्रस्य राज ;न्नेष सत्यं दासधर्मः प्रविष्टः ।

किं विद्विषो वाद्य मां धारयेयु ;र्नादेवीस्त्वं यद्यनया नरेन्द्र ॥ ००७ ॥

वैशंपायन उवाच ॥

राधेयस्य वचः श्रुत्वा राजा दुर्योधनस्तदा ।
युधिष्ठिरमुवाचेदं तूष्णींभूतमचेतसम् ॥ ००८ ॥

भीमार्जुनौ यमौ चैव स्थितौ ते नृप शासने ।
प्रश्नं प्रब्रूहि कृष्णां त्वमजितां यदि मन्यसे ॥ ००९ ॥

एवमुक्त्वा स कौन्तेयमपोह्य वसनं स्वकम् ।
स्मयन्निवैक्षत्पाञ्चालीमैश्वर्यमदमोहितः ॥ ०१० ॥

कदलीदण्डसदृशं सर्वलक्षणपूजितम् ।
गजहस्तप्रतीकाशं वज्रप्रतिमगौरवम् ॥ ०११ ॥

अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव ।
द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयत् ॥ ०१२ ॥

वृकोदरस्तदालोक्य नेत्रे उत्फाल्य लोहिते ।
प्रोवाच राजमध्ये तं सभां विश्रावयन्निव ॥ ०१३ ॥

पितृभिः सह सालोक्यं मा स्म गच्छेद्वृकोदरः ।
यद्येतमूरुं गदया न भिन्द्यां ते महाहवे ॥ ०१४ ॥

क्रुद्धस्य तस्य स्रोतोभ्यः सर्वेभ्यः पावकार्चिषः ।
वृक्षस्येव विनिश्चेरुः कोटरेभ्यः प्रदह्यतः ॥ ०१५ ॥

विदुर उवाच ॥

परं भयं पश्यत भीमसेना ;द्बुध्यध्वं राज्ञो वरुणस्येव पाशात् ।

दैवेरितो नूनमयं पुरस्ता ;त्परोऽनयो भरतेषूदपादि ॥ ०१६ ॥

अतिद्यूतं कृतमिदं धार्तराष्ट्रा ; येऽस्यां स्त्रियं विवदध्वं सभायाम् ।
योगक्षेमो दृश्यते वो महाभयः ; पापान्मन्त्रान्कुरवो मन्त्रयन्ति ॥ ०१७ ॥

इमं धर्मं कुरवो जानताशु ; दुर्दृष्टेऽस्मिन्परिषत्संप्रदुष्येत् ।
इमां चेत्पूर्वं कितवोऽग्लहीष्य ;दीशोऽभविष्यदपराजितात्मा ॥ ०१८ ॥

स्वप्ने यथैतद्धि धनं जितं स्या ;त्तदेवं मन्ये यस्य दीव्यत्यनीशः ।
गान्धारिपुत्रस्य वचो निशम्य ; धर्मादस्मात्कुरवो मापयात ॥ ०१९ ॥

दुर्योधन उवाच ॥

भीमस्य वाक्ये तद्वदेवार्जुनस्य ; स्थितोऽहं वै यमयोश्चैवमेव ।
युधिष्ठिरं चेत्प्रवदन्त्यनीश ;मथो दास्यान्मोक्ष्यसे याज्ञसेनि ॥ ०२० ॥

अर्जुन उवाच ॥

ईशो राजा पूर्वमासीद्ग्लहे नः ; कुन्तीपुत्रो धर्मराजो महात्मा ।
ईशस्त्वयं कस्य पराजितात्मा ; तज्जानीध्वं कुरवः सर्व एव ॥ ०२१ ॥

वैशंपायन उवाच ॥

ततो राज्ञो धृतराष्ट्रस्य गेहे ; गोमायुरुच्चैर्व्याहरदग्निहोत्रे ।
तं रासभाः प्रत्यभाषन्त राज ;न्समन्ततः पक्षिणश्चैव रौद्राः ॥ ०२२ ॥

तं च शब्दं विदुरस्तत्त्ववेदी ; शुश्राव घोरं सुबलात्मजा च ।
भीष्मद्रोणौ गौतमश्चापि विद्वा ;न्स्वस्ति स्वस्तीत्यपि चैवाहुरुच्चैः ॥ ०२३ ॥

ततो गान्धारी विदुरश्चैव विद्वां ;स्तमुत्पातं घोरमालक्ष्य राज्ञे ।
निवेदयामासतुरार्तवत्तदा ; ततो राजा वाक्यमिदं बभाषे ॥ ०२४ ॥

हतोऽसि दुर्योधन मन्दबुद्धे ; यस्त्वं सभायां कुरुपुङ्गवानाम् ।
स्त्रियं समाभाषसि दुर्विनीत ; विशेषतो द्रौपदीं धर्मपत्नीम् ॥ ०२५ ॥

एवमुक्त्वा धृतराष्ट्रो मनीषी ; हितान्वेषी बान्धवानामपायात् ।
कृष्णां पाञ्चालीमब्रवीत्सान्त्वपूर्वं ; विमृश्यैतत्प्रज्ञया तत्त्वबुद्धिः ॥ ०२६ ॥

धृतराष्ट्र उवाच ॥

वरं वृणीष्व पाञ्चालि मत्तो यदभिकाङ्क्षसि ।
वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती ॥ ०२७ ॥

द्रौपद्युवाच ॥

ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ ।
सर्वधर्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः ॥ ०२८ ॥

मनस्विनमजानन्तो मा वै ब्रूयुः कुमारकाः ।
एष वै दासपुत्रेति प्रतिविन्ध्यं तमागतम् ॥ ०२९ ॥

राजपुत्रः पुरा भूत्वा यथा नान्यः पुमान्क्वचित् ।
लालितो दासपुत्रत्वं पश्यन्नश्येद्धि भारत ॥ ०३० ॥

धृतराष्ट्र उवाच ॥

द्वितीयं ते वरं भद्रे ददामि वरयस्व माम् ।
मनो हि मे वितरति नैकं त्वं वरमर्हसि ॥ ०३१ ॥

द्रौपद्युवाच ॥

सरथौ सधनुष्कौ च भीमसेनधनञ्जयौ ।

नकुलं सहदेवं च द्वितीयं वरये वरम् ॥ ०३२ ॥

धृतराष्ट्र उवाच ॥

तृतीयं वरयास्मत्तो नासि द्वाभ्यां सुसत्कृता ।
त्वं हि सर्वस्नुषाणां मे श्रेयसी धर्मचारिणी ॥ ०३३ ॥

द्रौपद्युवाच ॥

लोभो धर्मस्य नाशाय भगवन्नाहमुत्सहे ।
अनर्हा वरमादातुं तृतीयं राजसत्तम ॥ ०३४ ॥

एकमाहुर्वैश्यवरं द्वौ तु क्षत्रस्त्रिया वरौ ।
त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः ॥ ०३५ ॥

पापीयांस इमे भूत्वा संतीर्णाः पतयो मम ।
वेत्स्यन्ति चैव भद्राणि राजन्पुण्येन कर्मणा ॥ ०३६ ॥

---

# अध्याय ०६४

कर्ण उवाच ॥

या नः श्रुता मनुष्येषु स्त्रियो रूपेण संमताः ।
तासामेतादृशं कर्म न कस्याञ्चन शुश्रुमः ॥ ००१ ॥

क्रोधाविष्टेषु पार्थेषु धार्तराष्ट्रेषु चाप्यति ।
द्रौपदी पाण्डुपुत्राणां कृष्णा शान्तिरिहाभवत् ॥ ००२ ॥

अप्लवेऽम्भसि मग्नानामप्रतिष्ठे निमज्जताम् ।
पाञ्चाली पाण्डुपुत्राणां नौरेषा पारगाभवत् ॥ ००३ ॥

वैशंपायन उवाच ॥

तद्वै श्रुत्वा भीमसेनः कुरुमध्येऽत्यमर्षणः ।
स्त्री गतिः पाण्डुपुत्राणामित्युवाच सुदुर्मनाः ॥ ००४ ॥

त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत् ।
अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः ॥ ००५ ॥

अमेध्ये वै गतप्राणे शून्ये ज्ञातिभिरुज्झिते ।
देहे त्रितयमेवैतत्पुरुषस्योपजायते ॥ ००६ ॥

तन्नो ज्योतिरभिहतं दाराणामभिमर्शनात् ।
धनञ्जय कथं स्वित्स्यादपत्यमभिमृष्टजम् ॥ ००७ ॥

अर्जुन उवाच ॥

न चैवोक्ता न चानुक्ता हीनतः परुषा गिरः ।
भारताः प्रतिजल्पन्ति सदा तूत्तमपूरुषाः ॥ ००८ ॥

स्मरन्ति सुकृतान्येव न वैराणि कृतानि च ।
सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ॥ ००९ ॥

भीम उवाच ॥

इहैवैतांस्तुरा सर्वान्हन्मि शत्रून्समागतान् ।
अथ निष्क्रम्य राजेन्द्र समूलान्कृन्धि भारत ॥ ०१० ॥

किं नो विवदितेनेह किं नः क्लेशेन भारत ।
अद्यैवैतान्निहन्मीह प्रशाधि वसुधामिमाम् ॥ ०११ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिर्वृतः ।
मृगमध्ये यथा सिंहो मुहुः परिघमैक्षत ॥ ०१२ ॥

सान्त्व्यमानो वीज्यमानः पार्थेनाक्लिष्टकर्मणा ।
स्विद्यते च महाबाहुरन्तर्दाहेन वीर्यवान् ॥ ०१३ ॥

क्रुद्धस्य तस्य स्रोतोभ्यः कर्णादिभ्यो नराधिप ।
सधूमः सस्फुलिङ्गार्चिः पावकः समजायत ॥ ०१४ ॥

भ्रुकुटीपुटदुष्प्रेक्ष्यमभवत्तस्य तन्मुखम् ।
युगान्तकाले संप्राप्ते कृतान्तस्येव रूपिणः ॥ ०१५ ॥

युधिष्ठिरस्तमावार्य बाहुना बाहुशालिनम् ।
मैवमित्यब्रवीच्चैनं जोषमास्स्वेति भारत ॥ ०१६ ॥

निवार्य तं महाबाहुं कोपसंरक्तलोचनम् ।
पितरं समुपातिष्ठद्धृतराष्ट्रं कृताञ्जलिः ॥ ०१७ ॥

---

# अध्याय ०६५

युधिष्ठिर उवाच ॥

राजन्किं करवामस्ते प्रशाध्यस्मांस्त्वमीश्वरः ।

नित्यं हि स्थातुमिच्छामस्तव भारत शासने ॥ ००१ ॥

धृतराष्ट्र उवाच ॥

अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत ।
अनुज्ञाताः सहधनाः स्वराज्यमनुशासत ॥ ००२ ॥

इदं त्वेवावबोद्धव्यं वृद्धस्य मम शासनम् ।
धिया निगदितं कृत्स्नं पथ्यं निःश्रेयसं परम् ॥ ००३ ॥

वेत्थ त्वं तात धर्माणां गतिं सूक्ष्मां युधिष्ठिर ।
विनीतोऽसि महाप्राज्ञ वृद्धानां पर्युपासिता ॥ ००४ ॥

यतो बुद्धिस्ततः शान्तिः प्रशमं गच्छ भारत ।
नादारौ क्रमते शस्त्रं दारौ शस्त्रं निपात्यते ॥ ००५ ॥

न वैराण्यभिजानन्ति गुणान्पश्यन्ति नागुणान् ।
विरोधं नाधिगच्छन्ति ये त उत्तमपूरुषाः ॥ ००६ ॥

संवादे परुषाण्याहुर्युधिष्ठिर नराधमाः ।
प्रत्याहुर्मध्यमास्त्वेतानुक्ताः परुषमुत्तरम् ॥ ००७ ॥

नैवोक्ता नैव चानुक्ता अहिताः परुषा गिरः ।
प्रतिजल्पन्ति वै धीराः सदा उत्तमपूरुषाः ॥ ००८ ॥

स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ॥ ००९ ॥

तथाचरितमार्येण त्वयास्मिन्सत्समागमे ।
दुर्योधनस्य पारुष्यं तत्तात हृदि मा कृथाः ॥ ०१० ॥

मातरं चैव गान्धारीं मां च त्वद्गुणकाङ्क्षिणम् ।
उपस्थितं वृद्धमन्धं पितरं पश्य भारत ॥ ०११ ॥

प्रेक्षापूर्वं मया द्यूतमिदमासीदुपेक्षितम् ।
मित्राणि द्रष्टुकामेन पुत्राणां च बलाबलम् ॥ ०१२ ॥

अशोच्याः कुरवो राजन्येषां त्वमनुशासिता ।
मन्त्री च विदुरो धीमान्सर्वशास्त्रविशारदः ॥ ०१३ ॥

त्वयि धर्मोऽर्जुने वीर्यं भीमसेने पराक्रमः ।
श्रद्धा च गुरुशुश्रूषा यमयोः पुरुषाग्र्ययोः ॥ ०१४ ॥

अजातशत्रो भद्रं ते खाण्डवप्रस्थमाविश ।
भ्रातृभिस्तेऽस्तु सौभ्रात्रं धर्मे ते धीयतां मनः ॥ ०१५ ॥

वैशंपायन उवाच ॥

इत्युक्तो भरतश्रेष्ठो धर्मराजो युधिष्ठिरः ।
कृत्वार्यसमयं सर्वं प्रतस्थे भ्रातृभिः सह ॥ ०१६ ॥

ते रथान्मेघसङ्काशानास्थाय सह कृष्णया ।
प्रययुर्हृष्टमनस इन्द्रप्रस्थं पुरोत्तमम् ॥ ०१७ ॥

# अनुद्यूतपर्व

## अध्याय ०६६

जनमेजय उवाच ॥

अनुज्ञातांस्तान्विदित्वा सरत्नधनसञ्चयान् ।
पाण्डवान्धार्तराष्ट्राणां कथमासीन्मनस्तदा ॥ ००१ ॥

वैशंपायन उवाच ॥

अनुज्ञातांस्तान्विदित्वा धृतराष्ट्रेण धीमता ।
राजन्दुःशासनः क्षिप्रं जगाम भ्रातरं प्रति ॥ ००२ ॥

दुर्योधनं समासाद्य सामात्यं भरतर्षभ ।
दुःखार्तो भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ ००३ ॥

दुःखेनैतत्समानीतं स्थविरो नाशयत्यसौ ।
शत्रुसाद्गमयद्द्रव्यं तद्बुध्यध्वं महारथाः ॥ ००४ ॥

अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
मिथः सङ्गम्य सहिताः पाण्डवान्प्रति मानिनः ॥ ००५ ॥

वैचित्रवीर्यं राजानं धृतराष्ट्रं मनीषिणम् ।
अभिगम्य त्वरायुक्ताः श्लक्ष्णं वचनमब्रुवन् ॥ ००६ ॥

दुर्योधन उवाच ॥

न त्वयेदं श्रुतं राजन्यज्जगाद बृहस्पतिः ।
शक्रस्य नीतिं प्रवदन्विद्वान्देवपुरोहितः ॥ ००७ ॥

सर्वोपायैर्निहन्तव्याः शत्रवः शत्रुकर्षण ।
पुरा युद्धाद्बलाद्वापि प्रकुर्वन्ति तवाहितम् ॥ ००८ ॥

ते वयं पाण्डवधनैः सर्वान्संपूज्य पार्थिवान् ।
यदि तान्योधयिष्यामः किं वा नः परिहास्यति ॥ ००९ ॥

अहीनाशीविषान्क्रुद्धान्दंशाय समुपस्थितान् ।
कृत्वा कण्ठे च पृष्ठे च कः समुत्स्रष्टुमर्हति ॥ ०१० ॥

आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः ।
निःशेषं नः करिष्यन्ति क्रुद्धा ह्याशीविषा यथा ॥ ०११ ॥

संनद्धो ह्यर्जुनो याति विवृत्य परमेषुधी ।
गाण्डीवं मुहुरादत्ते निःश्वसंश्च निरीक्षते ॥ ०१२ ॥

गदां गुर्वीं समुद्यम्य त्वरितश्च वृकोदरः ।
स्वरथं योजयित्वाशु निर्यात इति नः श्रुतम् ॥ ०१३ ॥

नकुलः खड्गमादाय चर्म चाप्यष्टचन्द्रकम् ।
सहदेवश्च राजा च चक्रुराकारमिङ्गितैः ॥ ०१४ ॥

ते त्वास्थाय रथान्सर्वे बहुशस्त्रपरिच्छदान् ।
अभिघ्नन्तो रथव्रातान्सेनायोगाय निर्ययुः ॥ ०१५ ॥

न क्षंस्यन्ते तथास्माभिर्जातु विप्रकृता हि ते ।
द्रौपद्याश्च परिक्लेशं कस्तेषां क्षन्तुमर्हति ॥ ०१६ ॥

पुनर्दीव्याम भद्रं ते वनवासाय पाण्डवैः ।
एवमेतान्वशे कर्तुं शक्ष्यामो भरतर्षभ ॥ ०१७ ॥

ते वा द्वादश वर्षाणि वयं वा द्यूतनिर्जिताः ।

प्रविशेम महारण्यमजिनैः प्रतिवासिताः ॥ ०१८ ॥

त्रयोदशं च सजने अज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ०१९ ॥

निवसेम वयं ते वा तथा द्यूतं प्रवर्तताम् ।
अक्षानुप्त्वा पुनर्द्यूतमिदं दीव्यन्तु पाण्डवाः ॥ ०२० ॥

एतत्कृत्यतमं राजन्नस्माकं भरतर्षभ ।
अयं हि शकुनिर्वेद सविद्यामक्षसंपदम् ॥ ०२१ ॥

दृढमूला वयं राज्ये मित्राणि परिगृह्य च ।
सारवद्विपुलं सैन्यं सत्कृत्य च दुरासदम् ॥ ०२२ ॥

ते च त्रयोदशे वर्षे पारयिष्यन्ति चेद्व्रतम् ।
जेष्यामस्तान्वयं राजन्रोचतां ते परंतप ॥ ०२३ ॥

धृतराष्ट्र उवाच ॥

तूर्णं प्रत्यानयस्वैतान्कामं व्यध्वगतानपि ।
आगच्छन्तु पुनर्द्यूतमिदं कुर्वन्तु पाण्डवाः ॥ ०२४ ॥

वैशंपायन उवाच ॥

ततो द्रोणः सोमदत्तो बाह्लीकश्च महारथः ।
विदुरो द्रोणपुत्रश्च वैश्यापुत्रश्च वीर्यवान् ॥ ०२५ ॥

भूरिश्रवाः शांतनवो विकर्णश्च महारथः ।
मा द्यूतमित्यभाषन्त शमोऽस्त्विति च सर्वशः ॥ ०२६ ॥

अकामानां च सर्वेषां सुहृदामर्थदर्शिनाम् ।

अकरोत्पाण्डवाह्वानं धृतराष्ट्रः सुतप्रियः ॥ ०२७ ॥

अथाब्रवीन्महाराज धृतराष्ट्रं जनेश्वरम् ।
पुत्रहार्दाद्धर्मयुक्तं गान्धारी शोककर्शिता ॥ ०२८ ॥

जाते दुर्योधने क्षत्ता महामतिरभाषत ।
नीयतां परलोकाय साध्वयं कुलपांसनः ॥ ०२९ ॥

व्यनदज्जातमात्रो हि गोमायुरिव भारत ।
अन्तो नूनं कुलस्यास्य कुरवस्तन्निबोधत ॥ ०३० ॥

मा बालानामशिष्टानामभिमंस्था मतिं प्रभो ।
मा कुलस्य क्षये घोरे कारणं त्वं भविष्यसि ॥ ०३१ ॥

बद्धं सेतुं को नु भिन्द्याद्धमेच्छान्तं च पावकम् ।
शमे धृतान्पुनः पार्थान्कोपयेत्को नु भारत ॥ ०३२ ॥

स्मरन्तं त्वामाजमीढ स्मारयिष्याम्यहं पुनः ।
शास्त्रं न शास्ति दुर्बुद्धिं श्रेयसे वेतराय वा ॥ ०३३ ॥

न वै वृद्धो बालमतिर्भवेद्राजन्कथञ्चन ।
त्वन्नेत्राः सन्तु ते पुत्रा मा त्वां दीर्णाः प्रहासिषुः ॥ ०३४ ॥

शमेन धर्मेण परस्य बुद्ध्या ; जाता बुद्धिः सास्तु ते मा प्रतीपा ।
प्रध्वंसिनी क्रूरसमाहिता श्री ;मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ ०३५ ॥

अथाब्रवीन्महाराजो गान्धारीं धर्मदर्शिनीम् ।
अन्तः कामं कुलस्यास्तु न शक्ष्यामि निवारितुम् ॥ ०३६ ॥

यथेच्छन्ति तथैवास्तु प्रत्यागच्छन्तु पाण्डवाः ।
पुनर्द्यूतं प्रकुर्वन्तु मामकाः पाण्डवैः सह ॥ ०३७ ॥

# अध्याय ०६७

वैशंपायन उवाच ॥

ततो व्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरम् ।
उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः ॥ ००१ ॥

उपस्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर ।
एहि पाण्डव दीव्येति पिता त्वामाह भारत ॥ ००२ ॥

युधिष्ठिर उवाच ॥

धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभम् ।
न निवृत्तिस्तयोरस्ति देवितव्यं पुनर्यदि ॥ ००३ ॥

अक्षद्यूते समाह्वानं नियोगात्स्थविरस्य च ।
जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे ॥ ००४ ॥

वैशंपायन उवाच ॥

इति ब्रुवन्निववृते भ्रातृभिः सह पाण्डवः ।
जानंश्च शकुनेर्मायां पार्थो द्यूतमियात्पुनः ॥ ००५ ॥

विविशुस्ते सभां तां तु पुनरेव महारथाः ।
व्यथयन्ति स्म चेतांसि सुहृदां भरतर्षभाः ॥ ००६ ॥

यथोपजोषमासीनाः पुनर्द्यूतप्रवृत्तये ।
सर्वलोकविनाशाय दैवेनोपनिपीडिताः ॥ ००७ ॥

शकुनिरुवाच ॥

अमुञ्चत्स्थविरो यद्वो धनं पूजितमेव तत् ।
महाधनं ग्लहं त्वेकं शृणु मे भरतर्षभ ॥ ००८ ॥

वयं द्वादश वर्षाणि युष्माभिर्द्यूतनिर्जिताः ।
प्रविशेम महारण्यं रौरवाजिनवाससः ॥ ००९ ॥

त्रयोदशं च सजने अज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ०१० ॥

अस्माभिर्वा जिता यूयं वने वर्षाणि द्वादश ।
वसध्वं कृष्णया सार्धमजिनैः प्रतिवासिताः ॥ ०११ ॥

त्रयोदशे च निर्वृत्ते पुनरेव यथोचितम् ।
स्वराज्यं प्रतिपत्तव्यमितरैरथ वेतरैः ॥ ०१२ ॥

अनेन व्यवसायेन सहास्माभिर्युधिष्ठिर ।
अक्षानुप्त्वा पुनर्द्यूतमेहि दीव्यस्व भारत ॥ ०१३ ॥

सभासद ऊचुः ॥

अहो धिग्बान्धवा नैनं बोधयन्ति महद्भयम् ।
बुद्ध्या बोध्यं न बुध्यन्ते स्वयं च भरतर्षभाः ॥ ०१४ ॥

वैशंपायन उवाच ॥

जनप्रवादान्सुबहूनिति शृण्वन्नराधिपः ।

ह्रिया च धर्मसङ्गाच्च पार्थो द्यूतमियात्पुनः ॥ ०१५ ॥

जानन्नपि महाबुद्धिः पुनर्द्यूतमवर्तयत् ।
अप्ययं न विनाशः स्यात्कुरूणामिति चिन्तयन् ॥ ०१६ ॥

युधिष्ठिर उवाच ॥

कथं वै मद्विधो राजा स्वधर्ममनुपालयन् ।
आहूतो विनिवर्तेत दीव्यामि शकुने त्वया ॥ ०१७ ॥

शकुनिरुवाच ॥

गवाश्वं बहुधेनूकमपर्यन्तमजाविकम् ।
गजाः कोशो हिरण्यं च दासीदासं च सर्वशः ॥ ०१८ ॥

एष नो ग्लह एवैको वनवासाय पाण्डवाः ।
यूयं वयं वा विजिता वसेम वनमाश्रिताः ॥ ०१९ ॥

अनेन व्यवसायेन दीव्याम भरतर्षभ ।
समुत्क्षेपेण चैकेन वनवासाय भारत ॥ ०२० ॥

वैशंपायन उवाच ॥

प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ०२१ ॥

# अध्याय ०६८

वैशंपायन उवाच ॥

वनवासाय चक्रुस्ते मतिं पार्थाः पराजिताः ।
अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् ॥ ००१ ॥

अजिनैः संवृतान्दृष्ट्वा हृतराज्यानरिंदमान् ।
प्रस्थितान्वनवासाय ततो दुःशासनोऽब्रवीत् ॥ ००२ ॥

प्रवृत्तं धार्तराष्ट्रस्य चक्रं राज्ञो महात्मनः ।
पराभूताः पाण्डुपुत्रा विपत्तिं परमां गताः ॥ ००३ ॥

अद्य देवाः संप्रयाताः समैर्वर्त्मभिरस्थलैः ।
गुणज्येष्ठास्तथा ज्येष्ठा भूयांसो यद्वयं परैः ॥ ००४ ॥

नरकं पातिताः पार्था दीर्घकालमनन्तकम् ।
सुखाच्च हीना राज्याच्च विनष्टाः शाश्वतीः समाः ॥ ००५ ॥

बलेन मत्ता ये ते स्म धार्तराष्ट्रान्प्रहासिषुः ।
ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवाः ॥ ००६ ॥

चित्रान्संनाहानवमुञ्चन्तु चैषां ; वासांसि दिव्यानि च भानुमन्ति ।
निवास्यन्तां रुरुचर्माणि सर्वे ; यथा ग्लहं सौबलस्याभ्युपेताः ॥ ००७ ॥

न सन्ति लोकेषु पुमांस ईदृशा ; इत्येव ये भावितबुद्धयः सदा ।
ज्ञास्यन्ति तेऽऽत्मानमिमेऽद्य पाण्डवा ; विपर्यये षण्ढतिला इवाफलाः ॥ ००८ ॥

अयं हि वासोदय ईदृशानां ; मनस्विनां कौरव मा भवेद्वः ।
अदीक्षितानामजिनानि यद्व ;द्बलीयसां पश्यत पाण्डवानाम् ॥ ००९ ॥

महाप्राज्ञः सोमको यज्ञसेनः ; कन्यां पाञ्चालीं पाण्डवेभ्यः प्रदाय ।
अकार्षीद्वै दुष्कृतं नेह सन्ति ; क्लीबाः पार्थाः पतयो याज्ञसेन्याः ॥ ०१० ॥

सूक्ष्मान्प्रावारानजिनानि चोदिता ;न्दृष्ट्वारण्ये निर्धनानप्रतिष्ठान् ।
कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि ; पतिं वृणीष्व यमिहान्यमिच्छसि ॥ ०११ ॥

एते हि सर्वे कुरवः समेताः ; क्षान्ता दान्ताः सुद्रविणोपपन्नाः ।
एषां वृणीष्वैकतमं पतित्वे ; न त्वां तपेत्कालविपर्ययोऽयम् ॥ ०१२ ॥

यथाफलाः षण्ढतिला यथा चर्ममया मृगाः ।
तथैव पाण्डवाः सर्वे यथा काकयवा अपि ॥ ०१३ ॥

किं पाण्डवांस्त्वं पतितानुपास्से ; मोघः श्रमः षण्ढतिलानुपास्य ।
एवं नृशंसः परुषाणि पार्था ;नश्रावयद्धृतराष्ट्रस्य पुत्रः ॥ ०१४ ॥

तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी ; निर्भर्त्स्योच्चैस्तं निगृह्यैव रोषात् ।
उवाचेदं सहसैवोपगम्य ; सिंहो यथा हैमवतः शृगालम् ॥ ०१५ ॥

भीमसेन उवाच ॥

क्रूर पापजनैर्जुष्टमकृतार्थं प्रभाषसे ।
गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे ॥ ०१६ ॥

यथा तुदसि मर्माणि वाक्शरैरिह नो भृशम् ।
तथा स्मारयिता तेऽहं कृन्तन्मर्माणि संयुगे ॥ ०१७ ॥

ये च त्वामनुवर्तन्ते कामलोभवशानुगाः ।
गोप्तारः सानुबन्धांस्तान्नेष्यामि यमसादनम् ॥ ०१८ ॥

वैशंपायन उवाच ॥

एवं ब्रुवाणमजिनैर्विवासितं ; दुःखाभिभूतं परिनृत्यति स्म ।
मध्ये कुरूणां धर्मनिबद्धमार्गं ; गौर्गौरिति स्माह्वयन्मुक्तलज्जः ॥ ०१९ ॥

भीमसेन उवाच ॥

नृशंसं परुषं क्रूरं शक्यं दुःशासन त्वया ।
निकृत्या हि धनं लब्ध्वा को विकत्थितुमर्हति ॥ ०२० ॥

मा ह स्म सुकृता.णल्लोकान्गच्छेत्पार्थो वृकोदरः ।
यदि वक्षसि भित्त्वा ते न पिबेच्छोणितं रणे ॥ ०२१ ॥

धार्तराष्ट्रान्रणे हत्वा मिषतां सर्वधन्विनाम् ।
शमं गन्तास्मि नचिरात्सत्यमेतद्ब्रवीमि वः ॥ ०२२ ॥

वैशंपायन उवाच ॥

तस्य राजा सिंहगतेः सखेलं ; दुर्योधनो भीमसेनस्य हर्षात् ।
गतिं स्वगत्यानुचकार मन्दो ; निर्गच्छतां पाण्डवानां सभायाः ॥ ०२३ ॥

नैतावता कृतमित्यब्रवीत्तं ; वृकोदरः संनिवृत्तार्धकायः ।
शीघ्रं हि त्वा निहतं सानुबन्धं ; संस्मार्याहं प्रतिवक्ष्यामि मूढ ॥ ०२४ ॥

एतत्समीक्ष्यात्मनि चावमानं ; नियम्य मन्युं बलवान्स मानी ।
राजानुगः संसदि कौरवाणां ; विनिष्क्रमन्वाक्यमुवाच भीमः ॥ ०२५ ॥

अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।
शकुनिं चाक्षकितवं सहदेवो हनिष्यति ॥ ०२६ ॥

इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः ।
सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ॥ ०२७ ॥

सुयोधनमिमं पापं हन्तास्मि गदया युधि ।
शिरः पादेन चास्याहमधिष्ठास्यामि भूतले ॥ ०२८ ॥

वाक्यशूरस्य चैवास्य परुषस्य दुरात्मनः ।
दुःशासनस्य रुधिरं पातास्मि मृगराडिव ॥ ०२९ ॥

अर्जुन उवाच ॥

नैव वाचा व्यवसितं भीम विज्ञायते सताम् ।
इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति ॥ ०३० ॥

दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ०३१ ॥

असूयितारं वक्तारं प्रस्रष्टारं दुरात्मनाम् ।
भीमसेन नियोगात्ते हन्ताहं कर्णमाहवे ॥ ०३२ ॥

अर्जुनः प्रतिजानीते भीमस्य प्रियकाम्यया ।
कर्णं कर्णानुगांश्चैव रणे हन्तास्मि पत्रिभिः ॥ ०३३ ॥

ये चान्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः ।
तांश्च सर्वाञ्शितैर्बाणैर्नेतास्मि यमसादनम् ॥ ०३४ ॥

चलेद्धि हिमवान्स्थानान्निष्प्रभः स्याद्दिवाकरः ।
शैत्यं सोमात्प्रणश्येत मत्सत्यं विचलेद्यदि ॥ ०३५ ॥

न प्रदास्यति चेद्राज्यमितो वर्षे चतुर्दशे ।
दुर्योधनो हि सत्कृत्य सत्यमेतद्भविष्यति ॥ ०३६ ॥

वैशंपायन उवाच ॥

इत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः ।
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ ०३७ ॥

सौबलस्य वधं प्रेप्सुरिदं वचनमब्रवीत् ।
क्रोधसंरक्तनयनो निःश्वसन्निव पन्नगः ॥ ०३८ ॥

अक्षान्यान्मन्यसे मूढ गान्धाराणां यशोहर ।
नैतेऽक्षा निशिता बाणास्त्वयैते समरे वृताः ॥ ०३९ ॥

यथा चैवोक्तवान्भीमस्त्वामुद्दिश्य सबान्धवम् ।
कर्ताहं कर्मणस्तस्य कुरु कार्याणि सर्वशः ॥ ०४० ॥

हन्तास्मि तरसा युद्धे त्वां विक्रम्य सबान्धवम् ।
यदि स्थास्यसि सङ्ग्रामे क्षत्रधर्मेण सौबल ॥ ०४१ ॥

सहदेववचः श्रुत्वा नकुलोऽपि विशां पते ।
दर्शनीयतमो नृणामिदं वचनमब्रवीत् ॥ ०४२ ॥

सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन्धृतराष्ट्रजैः ।
यैर्वाचः श्राविता रूक्षाः स्थितैर्दुर्योधनप्रिये ॥ ०४३ ॥

तान्धार्तराष्ट्रान्दुर्वृत्तान्मुमूर्षून्कालचोदितान् ।
दर्शयिष्यामि भूयिष्ठमहं वैवस्वतक्षयम् ॥ ०४४ ॥

निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
निर्धार्तराष्ट्रां पृथिवीं कर्तास्मि नचिरादिव ॥ ०४५ ॥

एवं ते पुरुषव्याघ्राः सर्वे व्यायतबाहवः ।
प्रतिज्ञा बहुलाः कृत्वा धृतराष्ट्रमुपागमन् ॥ ०४६ ॥

# अध्याय ०६९

युधिष्ठिर उवाच ॥

आमन्त्रयामि भरतांस्तथा वृद्धं पितामहम् ।
राजानं सोमदत्तं च महाराजं च बाह्लिकम् ॥ ००१ ॥

द्रोणं कृपं नृपांश्चान्यानश्वत्थामानमेव च ।
विदुरं धृतराष्ट्रं च धार्तराष्ट्रांश्च सर्वशः ॥ ००२ ॥

युयुत्सुं सञ्जयं चैव तथैवान्यान्सभासदः ।
सर्वानामन्त्र्य गच्छामि द्रष्टास्मि पुनरेत्य वः ॥ ००३ ॥

वैशंपायन उवाच ॥

न च किञ्चित्तदोचुस्ते ह्रिया सन्तो युधिष्ठिरम् ।
मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः ॥ ००४ ॥

विदुर उवाच ॥

आर्या पृथा राजपुत्री नारण्यं गन्तुमर्हति ।
सुकुमारी च वृद्धा च नित्यं चैव सुखोचिता ॥ ००५ ॥

इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि ।
इति पार्था विजानीध्वमगदं वोऽस्तु सर्वशः ॥ ००६ ॥

युधिष्ठिर विजानीहि ममेदं भरतर्षभ ।

नाधर्मेण जितः कश्चिद्व्यथते वै पराजयात् ॥ ००७ ॥

त्वं वै धर्मान्विजानीषे युधां वेत्ता धनञ्जयः ।
हन्तारीणां भीमसेनो नकुलस्त्वर्थसङ्ग्रही ॥ ००८ ॥

संयन्ता सहदेवस्तु धौम्यो ब्रह्मविदुत्तमः ।
धर्मार्थकुशला चैव द्रौपदी धर्मचारिणी ॥ ००९ ॥

अन्योन्यस्य प्रियाः सर्वे तथैव प्रियवादिनः ।
परैरभेद्याः संतुष्टाः को वो न स्पृहयेदिह ॥ ०१० ॥

एष वै सर्वकल्याणः समाधिस्तव भारत ।
नैनं शत्रुर्विषहते शक्रेणापि समोऽच्युत ॥ ०११ ॥

हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा ।
द्वैपायनेन कृष्णेन नगरे वारणावते ॥ ०१२ ॥

भृगुतुङ्गे च रामेण दृषद्वत्यां च शंभुना ।
अश्रौषीरसितस्यापि महर्षेरञ्जनं प्रति ॥ ०१३ ॥

द्रष्टा सदा नारदस्य धौम्यस्तेऽयं पुरोहितः ।
मा हार्षीः सांपराये त्वं बुद्धिं तामृषिपूजिताम् ॥ ०१४ ॥

पुरूरवसमैलं त्वं बुद्ध्या जयसि पाण्डव ।
शक्त्या जयसि राज्ञोऽन्यानृषीन्धर्मोपसेवया ॥ ०१५ ॥

ऐन्द्रे जये धृतमना याम्ये कोपविधारणे ।
विसर्गे चैव कौबेरे वारुणे चैव संयमे ॥ ०१६ ॥

आत्मप्रदानं सौम्यत्वमद्भ्यश्चैवोपजीवनम् ।
भूमेः क्षमा च तेजश्च समग्रं सूर्यमण्डलात् ॥ ०१७ ॥

वायोर्बलं विद्धि स त्वं भूतेभ्यश्चात्मसंभवम् ।
अगदं वोऽस्तु भद्रं वो द्रक्ष्यामि पुनरागतान् ॥ ०१८ ॥

आपद्धर्मार्थकृच्छ्रेषु सर्वकार्येषु वा पुनः ।
यथावत्प्रतिपद्येथाः काले काले युधिष्ठिर ॥ ०१९ ॥

आपृष्टोऽसीह कौन्तेय स्वस्ति प्राप्नुहि भारत ।
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामः पुनरागतम् ॥ ०२० ॥

वैशंपायन उवाच ॥

एवमुक्तस्तथेत्युक्त्वा पाण्डवः सत्यविक्रमः ।
भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः ॥ ०२१ ॥

---

## अध्याय ०७०

वैशंपायन उवाच ॥

तस्मिन्संप्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीम् ।
आपृच्छद्भृशदुःखार्ता याश्चान्यास्तत्र योषितः ॥ ००१ ॥

यथार्हं वन्दनाश्लेषान्कृत्वा गन्तुमियेष सा ।
ततो निनादः सुमहान्पाण्डवान्तःपुरेऽभवत् ॥ ००२ ॥

कुन्ती च भृशसंतप्ता द्रौपदीं प्रेक्ष्य गच्छतीम् ।
शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत् ॥ ००३ ॥

वत्से शोको न ते कार्यः प्राप्येदं व्यसनं महत् ।
स्त्रीधर्माणामभिज्ञासि शीलाचारवती तथा ॥ ००४ ॥

न त्वां संदेष्टुमर्हामि भर्तॄन्प्रति शुचिस्मिते ।
साध्वीगुणसमाधानैर्भूषितं ते कुलद्वयम् ॥ ००५ ॥

सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयानघे ।
अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता ॥ ००६ ॥

भाविन्यर्थे हि सत्स्त्रीणां वैक्लव्यं नोपजायते ।
गुरुधर्माभिगुप्ता च श्रेयः क्षिप्रमवाप्स्यसि ॥ ००७ ॥

सहदेवश्च मे पुत्रः सदावेक्ष्यो वने वसन् ।
यथेदं व्यसनं प्राप्य नास्य सीदेन्महन्मनः ॥ ००८ ॥

तथेत्युक्त्वा तु सा देवी स्रवन्नेत्रजलाविला ।
शोणिताक्तैकवसना मुक्तकेश्यभिनिर्ययौ ॥ ००९ ॥

तां क्रोशन्तीं पृथा दुःखादनुवव्राज गच्छतीम् ।
अथापश्यत्सुतान्सर्वान्हृताभरणवाससः ॥ ०१० ॥

रुरुचर्मावृततनून्ह्रिया किञ्चिदवाङ्मुखान् ।
परैः परीतान्संहृष्टैः सुहृद्भिश्चानुशोचितान् ॥ ०११ ॥

तदवस्थान्सुतान्सर्वानुपसृत्यातिवत्सला ।
सस्वजानावदच्छोकात्तत्तद्विलपती बहु ॥ ०१२ ॥

कथं सद्धर्मचारित्रवृत्तस्थितिविभूषितान् ।
अक्षुद्रान्दृढभक्तांश्च दैवतेज्यापरान्सदा ॥ ०१३ ॥

व्यसनं वः समभ्यागात्कोऽयं विधिविपर्ययः ।

कस्यापध्यानजं चेदमागः पश्यामि वो धिया ॥ ०१४ ॥

स्यात्तु मद्भाग्यदोषोऽयं याहं युष्मानजीजनम् ।
दुःखायासभुजोऽत्यर्थं युक्तानप्युत्तमैर्गुणैः ॥ ०१५ ॥

कथं वत्स्यथ दुर्गेषु वनेष्वृद्धिविनाकृताः ।
वीर्यसत्त्वबलोत्साहतेजोभिरकृशाः कृशाः ॥ ०१६ ॥

यद्येतदहमज्ञास्यं वनवासो हि वो ध्रुवम् ।
शतशृङ्गान्मृते पाण्डौ नागमिष्यं गजाह्वयम् ॥ ०१७ ॥

धन्यं वः पितरं मन्ये तपोमेधान्वितं तथा ।
यः पुत्राधिमसंप्राप्य स्वर्गेच्छामकरोत्प्रियाम् ॥ ०१८ ॥

धन्यां चातीन्द्रियज्ञानामिमां प्राप्तां परां गतिम् ।
मन्येऽद्य माद्रीं धर्मज्ञां कल्याणीं सर्वथैव हि ॥ ०१९ ॥

रत्या मत्या च गत्या च ययाहमभिसंधिता ।
जीवितप्रियतां मह्यं धिगिमां क्लेशभागिनीम् ॥ ०२० ॥

एवं विलपतीं कुन्तीमभिसान्त्व्य प्रणम्य च ।
पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः ॥ ०२१ ॥

विदुरादयश्च तामार्तां कुन्तीमाश्वास्य हेतुभिः ।
प्रावेशयन्गृहं क्षत्तुः स्वयमार्ततराः शनैः ॥ ०२२ ॥

राजा च धृतराष्ट्रः स शोकाकुलितचेतनः ।
क्षत्तुः संप्रेषयामास शीघ्रमागम्यतामिति ॥ ०२३ ॥

ततो जगाम विदुरो धृतराष्ट्रनिवेशनम् ।
तं पर्यपृच्छत्संविग्नो धृतराष्ट्रो नराधिपः ॥ ०२४ ॥

# अध्याय ०७१

धृतराष्ट्र उवाच ॥

कथं गच्छति कौन्तेयो धर्मराजो युधिष्ठिरः ।
भीमसेनः सव्यसाची माद्रीपुत्रौ च तावुभौ ॥ ००१ ॥

धौम्यश्चैव कथं क्षत्तर्द्रौपदी वा तपस्विनी ।
श्रोतुमिच्छाम्यहं सर्वं तेषामङ्गविचेष्टितम् ॥ ००२ ॥

विदुर उवाच ॥

वस्त्रेण संवृत्य मुखं कुन्तीपुत्रो युधिष्ठिरः ।
बाहू विशालौ कृत्वा तु भीमो गच्छति पाण्डवः ॥ ००३ ॥

सिकता वपन्सव्यसाची राजानमनुगच्छति ।
माद्रीपुत्रः सहदेवो मुखमालिप्य गच्छति ॥ ००४ ॥

पांसूपलिप्तसर्वाङ्गो नकुलश्चित्तविह्वलः ।
दर्शनीयतमो लोके राजानमनुगच्छति ॥ ००५ ॥

कृष्णा केशैः प्रतिच्छाद्य मुखमायतलोचना ।
दर्शनीया प्ररुदती राजानमनुगच्छति ॥ ००६ ॥

धौम्यो याम्यानि सामानि रौद्राणि च विशां पते ।
गायन्गच्छति मार्गेषु कुशानादाय पाणिना ॥ ००७ ॥

धृतराष्ट्र उवाच ॥

विविधानीह रूपाणि कृत्वा गच्छन्ति पाण्डवाः ।
तन्ममाचक्ष्व विदुर कस्मादेवं व्रजन्ति ते ॥ ००८ ॥

विदुर उवाच ॥

निकृतस्यापि ते पुत्रैर्हृते राज्ये धनेषु च ।
न धर्माच्चलते बुद्धिर्धर्मराजस्य धीमतः ॥ ००९ ॥

योऽसौ राजा घृणी नित्यं धार्तराष्ट्रेषु भारत ।
निकृत्या क्रोधसंतप्तो नोन्मीलयति लोचने ॥ ०१० ॥

नाहं जनं निर्दहेयं दृष्ट्वा घोरेण चक्षुषा ।
स पिधाय मुखं राजा तस्माद्गच्छति पाण्डवः ॥ ०११ ॥

यथा च भीमो व्रजति तन्मे निगदतः शृणु ।
बाह्वोर्बले नास्ति समो ममेति भरतर्षभ ॥ ०१२ ॥

बाहू विशालौ कृत्वा तु तेन भीमोऽपि गच्छति ।
बाहू दर्शयमानो हि बाहुद्रविणदर्पितः ॥ ०१३ ॥

चिकीर्षन्कर्म शत्रुभ्यो बाहुद्रव्यानुरूपतः ॥ ०१३ ॥

प्रदिशञ्शरसंपातान्कुन्तीपुत्रोऽर्जुनस्तदा ।
सिकता वपन्सव्यसाची राजानमनुगच्छति ॥ ०१४ ॥

असक्ताः सिकतास्तस्य यथा संप्रति भारत ।
असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु ॥ ०१५ ॥

न मे कश्चिद्विजानीयान्मुखमद्येति भारत ।

मुखमालिप्य तेनासौ सहदेवोऽपि गच्छति ॥ ०१६ ॥

नाहं मनांस्याददेयं मार्गे स्त्रीणामिति प्रभो ।
पांसूपचितसर्वाङ्गो नकुलस्तेन गच्छति ॥ ०१७ ॥

एकवस्त्रा तु रुदती मुक्तकेशी रजस्वला ।
शोणिताक्तार्द्रवसना द्रौपदी वाक्यमब्रवीत् ॥ ०१८ ॥

यत्कृतेऽहमिमां प्राप्ता तेषां वर्षे चतुर्दशे ।
हतपत्यो हतसुता हतबन्धुजनप्रियाः ॥ ०१९ ॥

बन्धुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः ।
एवं कृतोदका नार्यः प्रवेक्ष्यन्ति गजाह्वयम् ॥ ०२० ॥

कृत्वा तु नैर्ऋतान्दर्भान्धीरो धौम्यः पुरोहितः ।
सामानि गायन्याम्यानि पुरतो याति भारत ॥ ०२१ ॥

हतेषु भारतेष्वाजौ कुरूणां गुरवस्तदा ।
एवं सामानि गास्यन्तीत्युक्त्वा धौम्योऽपि गच्छति ॥ ०२२ ॥

हा हा गच्छन्ति नो नाथाः समवेक्षध्वमीदृशम् ।
इति पौराः सुदुःखार्ताः क्रोशन्ति स्म समन्ततः ॥ ०२३ ॥

एवमाकारलिङ्गैस्ते व्यवसायं मनोगतम् ।
कथयन्तः स्म कौन्तेया वनं जग्मुर्मनस्विनः ॥ ०२४ ॥

एवं तेषु नराग्र्येषु निर्यत्सु गजसाह्वयात् ।
अनभ्रे विद्युतश्चासन्भूमिश्च समकम्पत ॥ ०२५ ॥

राहुरग्रसदादित्यमपर्वणि विशां पते ।
उल्का चाप्यपसव्यं तु पुरं कृत्वा व्यशीर्यत ॥ ०२६ ॥

प्रव्याहरन्ति क्रव्यादा गृध्रगोमायुवायसाः ।
देवायतनचैत्येषु प्राकाराट्टालकेषु च ॥ ०२७ ॥

एवमेते महोत्पाता वनं गच्छति पाण्डवे ।
भारतानामभावाय राजन्दुर्मन्त्रिते तव ॥ ०२८ ॥

नारदश्च सभामध्ये कुरूणामग्रतः स्थितः ।
महर्षिभिः परिवृतो रौद्रं वाक्यमुवाच ह ॥ ०२९ ॥

इतश्चतुर्दशे वर्षे विनङ्क्ष्यन्तीह कौरवाः ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ ०३० ॥

इत्युक्त्वा दिवमाक्रम्य क्षिप्रमन्तरधीयत ।
ब्राह्मीं श्रियं सुविपुलां बिभ्रद्देवर्षिसत्तमः ॥ ०३१ ॥

ततो दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
द्रोणं द्वीपममन्यन्त राज्यं चास्मै न्यवेदयन् ॥ ०३२ ॥

अथाब्रवीत्ततो द्रोणो दुर्योधनममर्षणम् ।
दुःशासनं च कर्णं च सर्वानेव च भारतान् ॥ ०३३ ॥

अवध्यान्पाण्डवानाहुर्देवपुत्रान्द्विजातयः ।
अहं तु शरणं प्राप्तान्वर्तमानो यथाबलम् ॥ ०३४ ॥

गतान्सर्वात्मना भक्त्या धार्तराष्ट्रान्सराजकान् ।
नोत्सहे समभित्यक्तुं दैवमूलमतः परम् ॥ ०३५ ॥

धर्मतः पाण्डुपुत्रा वै वनं गच्छन्ति निर्जिताः ।
ते च द्वादश वर्षाणि वने वत्स्यन्ति कौरवाः ॥ ०३६ ॥

चरितब्रह्मचर्याश्च क्रोधामर्षवशानुगाः ।
वैरं प्रत्यानयिष्यन्ति मम दुःखाय पाण्डवाः ॥ ०३७ ॥

मया तु भ्रंशितो राज्याद्द्रुपदः सखिविग्रहे ।
पुत्रार्थमयजत्क्रोधाद्वधाय मम भारत ॥ ०३८ ॥

याजोपयाजतपसा पुत्रं लेभे स पावकात् ।
धृष्टद्युम्नं द्रौपदीं च वेदीमध्यात्सुमध्यमाम् ॥ ०३९ ॥

ज्वालावर्णो देवदत्तो धनुष्मान्कवची शरी ।
मर्त्यधर्मतया तस्मादिति मां भयमाविशत् ॥ ०४० ॥

गतो हि पक्षतां तेषां पार्षतः पुरुषर्षभः ।
सृष्टप्राणो भृशतरं तस्माद्योत्स्ये तवारिभिः ॥ ०४१ ॥

मद्वधाय श्रुतो ह्येष लोके चाप्यतिविश्रुतः ।
नूनं सोऽयमनुप्राप्तस्त्वत्कृते कालपर्ययः ॥ ०४२ ॥

त्वरिताः कुरुत श्रेयो नैतदेतावता कृतम् ।
मुहूर्तं सुखमेवैतत्तालच्छायेव हैमनी ॥ ०४३ ॥

यजध्वं च महायज्ञैर्भोगानश्नीत दत्त च ।
इतश्चतुर्दशे वर्षे महत्प्राप्स्यथ वैशसम् ॥ ०४४ ॥

दुर्योधन निशम्यैतत्प्रतिपद्य यथेच्छसि ।
साम वा पाण्डवेयेषु प्रयुङ्क्ष्व यदि मन्यसे ॥ ०४५ ॥

वैशंपायन उवाच ॥

द्रोणस्य वचनं श्रुत्वा धृतराष्ट्रोऽब्रवीदिदम् ।
सम्यगाह गुरुः क्षत्तरुपावर्तय पाण्डवान् ॥ ०४६ ॥

यदि वा न निवर्तन्ते सत्कृता यान्तु पाण्डवाः ।
सशस्त्ररथपादाता भोगवन्तश्च पुत्रकाः ॥ ०४७ ॥

---

## अध्याय ०७२

वैशंपायन उवाच ॥

वनं गतेषु पार्थेषु निर्जितेषु दुरोदरे ।
धृतराष्ट्रं महाराज तदा चिन्ता समाविशत् ॥ ००१ ॥

तं चिन्तयानमासीनं धृतराष्ट्रं जनेश्वरम् ।
निःश्वसन्तमनेकाग्रमिति होवाच सञ्जयः ॥ ००२ ॥

अवाप्य वसुसंपूर्णां वसुधां वसुधाधिप ।
प्रव्राज्य पाण्डवान्राज्याद्राजन्किमनुशोचसि ॥ ००३ ॥

धृतराष्ट्र उवाच ॥

अशोच्यं तु कुतस्तेषां येषां वैरं भविष्यति ।
पाण्डवैर्युद्धशौण्डैर्हि मित्रवद्भिर्महारथैः ॥ ००४ ॥

सञ्जय उवाच ॥

तवेदं सुकृतं राजन्महद्वैरं भविष्यति ।
विनाशः सर्वलोकस्य सानुबन्धो भविष्यति ॥ ००५ ॥

वार्यमाणोऽपि भीष्मेण द्रोणेन विदुरेण च ।

पाण्डवानां प्रियां भार्यां द्रौपदीं धर्मचारिणीम् ॥ ००६ ॥

प्राहिणोदानयेहेति पुत्रो दुर्योधनस्तव ।
सूतपुत्रं सुमन्दात्मा निर्लज्जः प्रातिकामिनम् ॥ ००७ ॥

धृतराष्ट्र उवाच ॥

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपाचीनानि पश्यति ॥ ००८ ॥

बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ००९ ॥

अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिणः ।
उत्तिष्ठन्ति विनाशान्ते नरं तच्चास्य रोचते ॥ ०१० ॥

न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् ।
कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ ०११ ॥

आसादितमिदं घोरं तुमुलं लोमहर्षणम् ।
पाञ्चालीमपकर्षद्भिः सभामध्ये तपस्विनीम् ॥ ०१२ ॥

अयोनिजां रूपवतीं कुले जातां विभावरीम् ।
को नु तां सर्वधर्मज्ञां परिभूय यशस्विनीम् ॥ ०१३ ॥

पर्यानयेत्सभामध्यमृते दुर्द्यूतदेविनम् ।
स्त्रीधर्मिणीं वरारोहां शोणितेन समुक्षिताम् ॥ ०१४ ॥

एकवस्त्रां च पाञ्चालीं पाण्डवानभ्यवेक्षतीम् ।
हृतस्वान्भ्रष्टचित्तांस्तान्हृतदारान्हृतश्रियः ॥ ०१५ ॥

विहीनान्सर्वकामेभ्यो दासभाववशं गतान् ।
धर्मपाशपरिक्षिप्तानशक्तानिव विक्रमे ॥ ०१६ ॥

क्रुद्धाममर्षितां कृष्णां दुःखितां कुरुसंसदि ।
दुर्योधनश्च कर्णश्च कटुकान्यभ्यभाषताम् ॥ ०१७ ॥

तस्याः कृपणचक्षुर्भ्यां प्रदह्येतापि मेदिनी ।
अपि शेषं भवेदद्य पुत्राणां मम सञ्जय ॥ ०१८ ॥

भारतानां स्त्रियः सर्वा गान्धार्या सह सङ्गताः ।
प्राक्रोशन्भैरवं तत्र दृष्ट्वा कृष्णां सभागताम् ॥ ०१९ ॥

अग्निहोत्राणि सायाह्ने न चाहूयन्त सर्वशः ।
ब्राह्मणाः कुपिताश्चासन्द्रौपद्याः परिकर्षणे ॥ ०२० ॥

आसीन्निष्टानको घोरो निर्घातश्च महानभूत् ।
दिवोल्काश्चापतन्घोरा राहुश्चार्कमुपाग्रसत् ॥ ०२१ ॥

अपर्वणि महाघोरं प्रजानां जनयन्भयम् ॥ ०२१ ॥

तथैव रथशालासु प्रादुरासीद्धुताशनः ।
ध्वजाश्च व्यवशीर्यन्त भरतानामभूतये ॥ ०२२ ॥

दुर्योधनस्याग्निहोत्रे प्राक्रोशन्भैरवं शिवाः ।
तास्तदा प्रत्यभाषन्त रासभाः सर्वतोदिशम् ॥ ०२३ ॥

प्रातिष्ठत ततो भीष्मो द्रोणेन सह सञ्जय ।
कृपश्च सोमदत्तश्च बाह्लीकश्च महारथः ॥ ०२४ ॥

ततोऽहमब्रुवं तत्र विदुरेण प्रचोदितः ।
वरं ददानि कृष्णायै काङ्क्षितं यद्यदिच्छति ॥ ०२५ ॥

अवृणोत्तत्र पाञ्चाली पाण्डवानमितौजसः ।
सरथान्सधनुष्कांश्चाप्यनुज्ञासिषमप्यहम् ॥ ०२६ ॥

अथाब्रवीन्महाप्राज्ञो विदुरः सर्वधर्मवित् ।
एतदन्ताः स्थ भरता यद्वः कृष्णा सभां गता ॥ ०२७ ॥

एषा पाञ्चालराजस्य सुतैषा श्रीरनुत्तमा ।
पाञ्चाली पाण्डवानेतान्दैवसृष्टोपसर्पति ॥ ०२८ ॥

तस्याः पार्थाः परिक्लेशं न क्षंस्यन्तेऽत्यमर्षणाः ।
वृष्णयो वा महेष्वासाः पाञ्चाला वा महौजसः ॥ ०२९ ॥

तेन सत्याभिसंधेन वासुदेवेन रक्षिताः ।
आगमिष्यति बीभत्सुः पाञ्चालैरभिरक्षितः ॥ ०३० ॥

तेषां मध्ये महेष्वासो भीमसेनो महाबलः ।
आगमिष्यति धुन्वानो गदां दण्डमिवान्तकः ॥ ०३१ ॥

ततो गाण्डीवनिर्घोषं श्रुत्वा पार्थस्य धीमतः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ॥ ०३२ ॥

तत्र मे रोचते नित्यं पार्थैः सार्धं न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवाञ्शक्तिमत्तरान् ॥ ०३३ ॥

तथा हि बलवान्राजा जरासंधो महाद्युतिः ।
बाहुप्रहरणेनैव भीमेन निहतो युधि ॥ ०३४ ॥

तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ।
उभयोः पक्षयोर्युक्तं क्रियतामविशङ्कया ॥ ०३५ ॥

एवं गावल्गणे क्षत्ता धर्मार्थसहितं वचः ।
उक्तवान्न गृहीतं च मया पुत्रहितेप्सया ॥ ०३६ ॥

---